आदिपदाद् बाह्यपदार्थास्मृतिः, एतत्समानाधिकरणा गुणा भावा वर्ष्याः प्रकीर्तिताः । वृष्टिजलतुल्याः कथिता इत्यर्थः । यथा वृष्टिसमये वृष्टिजलं सर्वदेशं व्याप्नोति, सर्वत्र सुलभमाधारगुणमादाय कार्यविशेषमन्नादिकं च जनयति, तथैतेषां योगादिसमय एव भगवद्भावो देहेन्द्रियादि सर्वं व्याप्नोति, सुलभः पात्रविशेषे स्वसजातीयं भावविशेषं च जनयति, अत एव संयुक्ता इत्यनेन सम्यग्योगो निरूपित इति भावः । द्वादशं भावमाहुः तपोज्ञानादिभावेनेति । तपः पञ्चाग्निसहनादि, ज्ञानं जीवात्मनः, आदिपदाद्वर्णाश्रमाचारश्च, प्रत्येकमेतान्येव भावस्तपोज्ञानादिभिर्वा यो भावस्तेनोपलक्षिताः स्वेदजलतुल्याः कथितास्तेषां भावः स्वेदजलतुल्य इत्यर्थः । केचित् तपसैव भगवानाराध्य इति मन्यन्ते । वस्तुतो भक्तिसाध्य एव । 'मन्ये धनाभिजनरूपतपःश्रुतौजस्तेजःप्रभावबलपौरुषबुद्धियोगाः । नाराधनाय हि भवन्ति परस्य पुंसो भक्त्या तुतोष भगवान् गजयूथपाये'त्यादिवाक्यैः । केचिदितरभिन्नत्वेन स्वात्मज्ञानान्मोक्ष इति तदेव भजनमिति मन्यन्ते । वस्तुतस्तु 'तमेवं विद्वानमृत इह भवती'त्यादिर्भगवज्ज्ञानमेव मोक्षसाधनम् । 'श्रेयःसृतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये' इति वाक्ये केवलात्मज्ञानस्य निन्दितत्वाच्च । केचित्तु 'वर्णाश्रमाचारवता पुरुषेण परः पुमान् । विष्णुराराध्यते पन्था नान्यत्तत्तोषकारण'मिति वाक्याद्वर्णाश्रमाचारमेव भगवद्भजनं मन्यन्ते । तदपि न विचारक्षमम् । वर्णाश्रमाचारस्याधिकारिविशेषणत्वादाराधनं तु श्रवणादिरूपं भिन्नमेव । 'धर्मः सत्यदयोपेतः, धर्मः स्वनुष्ठितः पुंसाम्, विप्राद्द्विषड्गुणयुतादरविन्दनाभपादारविन्दविमुखात् श्वपचं वरिष्ठम् । मन्ये तदर्पितमनोवचने हितार्थः प्राणं पुनाति स कुलं न तु भूरिमान' इत्यादिभिर्भगवद्भजनाभावे भगवद्वैमुख्ये च धर्मस्याप्रयोजकत्वनिरूपणात् । 'वर्णाश्रमवतां धर्म एष आचारलक्षणः । स एव मद्भक्तियुतो निःश्रेयसकरः पर' इति भगवतोक्तं प्रत्याचारभक्त्योर्भेदेन निरूपणात् । द्विजपश्वनुग्रहे द्विजैर्भगवद्वैमुख्ये त्रिवृद्विद्यादीनां धिक्कारोक्तेश्च । 'ये त्विहासक्तमनस' इत्यादिवाक्यैः सर्वकर्माणि कुर्वतामपि भगवद्वैमुख्योक्तेश्च । अत एव 'परमापदमापन्नो हर्षे वा समुपस्थिते । नैकादशीं त्यजेद्यस्तु यस्य दीक्षास्ति वैष्णवी ।' 'समात्मा सर्वजीवेषु निजाचारादविच्युतः । विष्ण्वर्पिताखिलाचारः स हि वैष्णव उच्यत' इत्येभिः पुराणवाक्यैर्माधवाचार्यैः कालमाधवीये वैष्णवलक्षणमभिधाय वैष्णवस्मार्तयोर्भेदो निरूपितः । वर्णाश्रमाचारस्यैव भजनरूपत्वे सम्प्रत्युक्तसकलविरोधात् । यथा स्वेदजलं न शुद्धिहेतुस्नानाचमनाद्युपयोगि तर्षनिवर्तकं तापहारकं वा भवति, तथैतेषां भावोपीति भावः ॥ ८ ॥

अलौकिकेन ज्ञानेन ये तु प्रोक्ता हरेर्गुणाः ।
कादाचित्काः शब्दगम्याः पतच्छब्दाः प्रकीर्तिताः ॥ ९ ॥

त्रयोदशं भावमाहुः अलौकिकेनेति । महदनुग्रहादिना प्राप्तज्ञानेन ये सर्वदुः-

खदर्तुर्गुणा ऐश्वर्यादयः प्रोक्ताः कदाचिदेव प्रतीयमानाः वेदादिगम्यास्ते गुणाः दूरात् पर्वतादेर्धारारूपेण पततां जलानां ये शब्दास्तत्सदृशाः प्रकीर्तिताः कथिता इत्यर्थः । यथा धाराजलशब्दाः (पर्वतपतित)धाराजलानां ज्ञापकास्तथोच्यमाना भगवद्गुणा अपि वक्तॄणां धाराजलसदृशभावज्ञापका इत्यर्थः । यथा धाराजलं नैर्मल्यशैत्यमाधुर्याविच्छेदयोगाद्दर्शनस्पर्शनस्नानाचमनपानादिभिर्मनोहारि तापहारि सौहित्यसुखकारि, तथैतेषां काव्यादिषु प्रतीयमानो भावोपीति भावः ॥ ९ ॥

देवाद्युपासनोद्भूताः पृष्वा भूमेरिवोद्गताः ।
साधनादिप्रकारेण नवधाभक्तिमार्गतः ॥ १० ॥
प्रेमपूर्त्या स्फुरद्धर्माः स्यन्दमानाः प्रकीर्तिताः ।

चतुर्दशं भावमाहुः देवा इति । श्रीपुरुषोत्तमव्यतिरिक्तानां देवानामादिपदात् पितृमातृपतिज्येष्ठभ्रात्रादय उच्यन्ते । एतेषामेव उपासनेऽयमेव देवः परमेश्वरो, वयं परमेश्वरभजनमेव कुर्मः । पितैवास्माकमीश्वरः, पितृसेवां विष्णुभजनमेव कुर्म इत्येवमादयो ये उद्भता भावास्ते, अथ च देवाः शिवादयः आदिपदाद् यक्षरक्षःपिशाचादयः । तेषां देवादीनामुपासनमुद्भतमुद्भतं येषु भगवद्भावेषु ते भावा देवाद्युपासनेन सह चोद्भूता भगवद्भावास्ते च भूमेरुद्गताः पृष्वा इव । 'अवस्या यजन्याः पृष्वा' इति वेदभाष्ये । पृष्वा जलबिन्दवस्तुषारकणाः जलबुद्बुदा वा त इवेत्यर्थः । तेषां भ्रान्त्या भजनातुल्यतयैव सर्वभजनाच्च । महापुरुषाणां भगवद्भक्तानां भजनं तु भगवत्प्रीतिमुक्तिशुद्ध्यादिसाधकत्वाद्भिन्नरूपमेव । अत एव श्रीभागवते 'मद्भक्तपूजाभ्यधिका । तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् । भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः । प्रसङ्गमजरं पाशमात्मनः कवयो विदुः । स एव साधुषु कृतो मोक्षद्वारमपावृतम् । सतां प्रसङ्गान्मम वीर्यसंविदः । न तथा ह्यघवान् राजन् पूयेत तपआदिभिः । यथा कृष्णार्पितप्राणस्तत्पूरुषनिषेवया । किरातहूणान्ध्रे'त्यादि । पित्रादिसेवायाः स्वर्गादिसाधकत्वान्न भगवत्फलसाधकत्वम् । अत एव भगवता गीतायां 'येप्यन्यदेवताभक्ता' इत्यत्र, स्वयजने विधिपूर्वकत्वाभाव उक्तो, विध्यभावे कर्मणि फलाभाववदत्रापि भगवत्फलं न भवतीत्याशयेन । ([1]'यान्ति मद्याजिनोपि माम् । देवान् देवयजो यान्ती' तिवाक्यैः पुरुषोत्तमभजनकर्तुरेव पुरुषोत्तमप्राप्तिस्तस्यैव भगवान् योगक्षेमं वहतीति पुरुषोत्तमप्राप्तौ पुरुषोत्तमभजनमेव विधिर्नतु केनापि प्रकारेणान्यभजनमित्यत्र विध्यभावात् फलाभावो युक्त इति भावः । ) यथा बिन्दवस्तुषारकणाः बुद्बुदजलं वा न स्नानाचमनपानादिभिः शुद्धितृप्त्यादिसाधकं तथैतेषां भावोपि न शुद्ध्यादिसाधक इत्यर्थः । पञ्चदशं भावमाहुः साधनादिप्रकारेणेति । साधनमादिः फलात् यस्मिन् प्रकारे तेन प्रकारेण नवधा भक्तिरेव मार्गो भगवत्प्राप्तिसाधनं तस्मात् क्रमेण प्रेमपूर्त्या स्फुरन्तो धर्मा येषां श्रवणादयो

१. ( ) एतच्चिह्नान्तरितभागः प्राचीनपुस्तकेषु न दृश्यते ।

नद्यवेशादयो वा ते स्यन्दमानाः प्रस्रवणजलतुल्यभावाः प्रकीर्तिता इत्यर्थः । भक्तिमार्गे मर्यादया भगवदङ्गीकारादकामोपहृतैरखिलवर्णाश्रमधर्मैः सत्त्वशुद्धौ भगवद्भक्तिरेव पुरुषार्थ इति शास्त्रार्थनिश्चयाच्छ्रवणादिभिस्तेषां भाव इति । यथा पर्वतोपरि सृष्टितडागादिसद्भावे प्रस्रवणजलं वर्धते तदभावे ह्रसत इति तत्सापेक्षं शुद्ध्यादिहेतुश्च, तथैतेषां भावोपि साधनानुसारी शुद्ध्यादिहेतुश्चेति भावः । इदमेवोक्तं भक्तिहंसे । 'आद्यस्तु तत्साधने भवति प्रवृत्तस्तथैव तद्वरणात्, परन्तु स्नेहोत्पत्तिपर्यन्तं विधिरेव तत्र प्रयोजकस्तदुत्पत्त्यनन्तरं च रागादेव तत्सम्बन्धिपदार्थे यतिष्यत इति विधेरप्रयोजकत्व'मिति । एकादशस्कन्धे च 'भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेनघ । पुनश्च कथयिष्यामि मद्भक्तेः कारणं परम् । श्रद्धामृतकथायां मे शश्वन्मदनुकीर्तनम् । परिनिष्ठा तु पूजायां स्तुतिभिः स्तवनं मम । आदरः परिचर्यायां सर्वाङ्गैरभिवन्दनम् । मद्भक्तपूजाभ्यधिका सर्वभूतेषु मन्मतिः । मदर्थेष्वङ्गचेष्टा च वचसा मद्गुणेरणम् । मय्यर्पणं च मनसः सर्वकामविवर्जनम् । मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च । इष्टं दत्तं हुतं जप्तं मदर्थं यद्व्रतं तपः । एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् । मयि सञ्जायते भक्तिः कोन्योर्थोऽस्यावशिष्यते' इत्यादिभिर्निरूपितम् । नवधा भक्तिस्तु 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् । इति पुंसार्पिता विष्णोर्भक्तिश्चेन्नवलक्षणा । क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तम'मिति प्रह्लादैर्निरूपिता ॥ १० ॥

**यादृशास्तादृशाः प्रोक्ता वृद्धिक्षयविवर्जिताः ॥ ११ ॥**
**स्थावरास्ते समाख्याता मर्यादैकप्रतिष्ठिताः ।**

षोडशं भावमाहुः **यादृशा** इति । यादृशाः पूर्वमव्यवधानेन प्रोक्तास्तादृशा वृद्धिक्षयविवर्जिताश्चेत्, मर्यादैकप्रतिष्ठिताः मर्यादायामेव केवलाः प्रतिष्ठिताः, न तु ततोधिकविशेषाङ्गीकारयुक्तास्ते स्थावरा आपः स्थिरजलतुल्यभावाः समाख्याता इत्यर्थः । यद्वा । ये केचित् येनकेनचित् प्राप्तवृद्धिक्षयविवर्जितप्रेमाणस्ते तथाप्रोक्ता इत्यर्थः । अत एव प्रेमस्वरूपं श्रूयते । 'आविर्भावदिने न येन गणितो हेतुस्तनीयानपि क्षीयेतापि न चापराधविधिना नत्या न यद्वर्धते । पीयूषप्रतिवादिनस्त्रिजगतीदुःखद्रुहः सांप्रतं प्रेम्णस्तस्य गुरोः किमद्य करवै वाङ्निष्ठता लाघव'मिति । यथैतज्जलं नातपेन शुष्यति स्नानादिहेतुश्च भवति, तथैतेषां भावोपि न संसारतापकुतर्कादिभिर्गच्छति शुद्ध्यादिहेतुश्च भवतीति भावः ॥ ११½ ॥

**अनेकजन्मसंसिद्धा जन्मप्रभृति सर्वदा ॥ १२ ॥**
**सङ्गादिगुणदोषाभ्यां वृद्धिक्षययुता भुवि ।**
**निरन्तरोद्गमयुता नद्यस्ते परिकीर्तिताः ॥ १३ ॥**

सप्तदशं भावमाहुः **अनेकजन्मेति** । ये भावा अनेकजन्मसु 'जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः । नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते' इति वाक्यात् तपो-

ध्यानसमाधिभिः सम्यक्सिद्धाः तज्जन्मारभ्य सदा भुवि आधारभूते चात्मनि सङ्गः सत्सङ्गः आदिपदादन्नकालविशेषदेशविशेषाः दुष्टसङ्गादयश्च तेषां यौ गुणदोषौ ताभ्यां क्रमेण वृद्धिक्षययुताः, निरन्तर उद्गम उद्भवो गमनं च तेन युताः। एतादृशास्ते भावा नद्यः स्वतोऽसमुद्रगामिनदीजलतुल्याः परकीर्तिता इत्यर्थः। यथा नदीजलं वृष्ट्यातपाभ्यां वृद्धिक्षयवद्भवति, भूमिपर्वतादिगुणदोषाभ्यां गुणदोषवद्भवति, शुद्धितृष्त्यादिहेतुश्च भवति, तथैते भावा अपि तपोध्यानसमाधिसाध्यपापक्षयद्वारा जनिता इति शुद्ध्यादिहेतवः सत्सङ्गादिभिर्गुणवन्तो भवन्ति, वर्धन्ते च, दुष्टसङ्गादिभिर्दोषवन्तः भवन्ति, हीयन्ते चेति भावः ॥ १३ ॥

**एतादृशाः स्वतन्त्रास्ते सिन्धवः परिकीर्तिताः ।**
**पूर्णा भगवदीया ये शेषव्यासाग्निमारुताः ॥ १४ ॥**
**जडनारदमैत्राद्यास्ते समुद्राः प्रकीर्तिताः ।**

अष्टादशं भावमाहुः **एतादृशा** इति । अव्यवधानेनोक्ता भावाः स्वतन्त्राः निरुपाधिकाश्चेत्तदा ते सिन्धवः स्वतःसमुद्रगामिन्यो महानदस्तज्जलतुल्याः परिकीर्तिता इत्यर्थः । सिन्धुषु नदा अपि गृह्यन्ते । यथा महानदीजलप्रविष्टाः समुद्रं प्रविशन्ति, तथैतद्भावानुसारिणोपि दयासमुद्रं भगवन्तं प्रविशन्ति, महानदीजलवदेते भावाः शुद्ध्यादिहेतवोपि भवन्तीति भावः । एकोनविंशं भावमाहुः **पूर्णा भगवदीया** इति । ये भगवदीयाः भक्त्या सेवया पूर्णा 'भगवदीयत्वेनैव परिसमाप्तसर्वार्थाः' येषामात्मादिकं भगवदर्थमपेक्षितं नत्वात्मार्थं भगवान् सेव्यस्ते समुद्राः रत्नाकरतुल्याः प्रकीर्तितास्तेषां भावस्तज्जलतुल्य इत्यर्थः । भगवदीयशब्दस्तु नामधेयस्य विकल्पेन वृद्धत्वाच्छेपार्थे छप्रत्यये 'बहुलं छन्दसी'ति छसो विधानात् सिद्धः, पुराणप्रसिद्धोपि, वाचस्पत्यादिवल्लोके ज्ञेयः। तान् प्रसिद्धान् गणयन्ति **शेषव्यासाग्निमारुता** इति। **जडनारदमैत्राद्या** इति । शेषो भगवद्गुणपरः शय्यादिभावेन भगवन्तं सेवते विभूतिरूपश्च । 'अनन्तश्चास्मि नागाना'मिति वाक्यात् । व्यासः कलावतारः सदा भगवद्धर्मनिरूपणपरो यस्य पूर्णभगवद्धर्मनिरूपणेनात्मप्रसादः।अग्निर्भगवदास्यरूपः स्वयमेव येषां सर्वांशे सर्वस्वरूपः कृष्ण एव। मारुतो हनुमान् श्रीरघुनाथतद्गुणतत्परः। जडो जडभरतो योन्तःपूर्णभावाद्बहिर्जड इव प्रतीयते। नारदः सदा पुरुषोत्तमगुणगानैकतानः। मैत्रो मैत्रेयः पराशरशिष्यो भगवद्धर्मवक्ता। आद्यपदादुद्धवादयः । समुद्रदृष्टान्तेन यथा चन्द्रदर्शनादब्धिरुत्तुङ्गतरलिततरङ्गो भवति, तथा भगवन्मुखचन्द्रदर्शनादेतेपि प्रवर्धमानभावा भवन्तीति भावः । अयमेव भावः कपिलदेवैरुक्तः 'सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत। दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः। स एव भक्तियोगाख्य आत्यन्तिक उदाहृत' इति ॥ १४½ ॥

पूर्णभावान् स्वरूपज्ञानभेदेन विलक्षणान्निरूपयन्ति लोकवेदगुणैरिति ।

लोकवेदगुणैर्मिश्रभावेनैके हरेर्गुणान् ॥ १५ ॥
वर्णयन्ति समुद्रास्ते क्षाराद्याः षट् प्रकीर्तिताः ।

एके लोकमिश्रभावेन । एके वेदमिश्रभावेन । एके गुणैर्मिश्रभावेन हरिगुणान् वर्णयन्ति । ते क्रमेणोच्यन्ते । रामकृष्णादयो मनुष्या एव, परं बलादिनाधिका इति ज्ञात्वैके हरेर्गुणान् वर्णयन्ति । ते क्षारसमुद्रतुल्यास्तेषां भावस्तु तज्जलतुल्य इत्यर्थः । यथा क्षारजलं न तृषादिनिवर्तकं न वा तृप्तिसुखकारि तथैतेषां भावोपीति भावः । एके 'उद्धृतासि वराहेण कृष्णेन शतबाहुना' इत्यादिना वेदे भूम्युद्धारादेः कृष्णकर्तृकत्वेन निरूपणात् जगत्कर्तैव विविधशरीरेषु आविश्य कार्यं कृत्वा तानि त्यजतीति ज्ञात्वा हरेर्गुणान् वर्णयन्ति । ते दधिमण्डोदतुल्यास्तेषां भावस्तज्जलतुल्य इत्यर्थः । यथा दधिमण्डस्यासारत्वान्न पुष्टिहेतुत्वम् । तथैतेषां भावस्यापीति भावः । मायागुणैर्विना भगवतः कर्तृत्वाभावात्तद्गुणैरेव भगवान् सर्वं करोतीति ज्ञात्वा हरेर्गुणान् ये वर्णयन्ति ते सुरोदतुल्यास्तेषां भावः सुरातुल्य इत्यर्थः । यथा सुरायाः स्वरूपविस्मारकत्वं दोषजनकत्वं तथैतद्भावस्यापीति भावः । भगवान् सर्वेश्वरः सर्वं कर्तुं समर्थ इति ज्ञात्वा ये हरेर्गुणान् वर्णयन्ति ते क्षीरोदतुल्यास्तेषां भावः क्षीरतुल्य इत्यर्थः । यथा क्षीरं स्वादु मधुरं पुष्टिजनकं तथायं भावोपीति भावः । भगवान् महावीर्यः स्वभक्तानपि वीर्यवतः करोतीति ज्ञात्वा ये हरेर्गुणान्वर्णयन्ति ते घृतोदतुल्यास्तेषां भावो घृततुल्य इत्यर्थः । यथा घृतं वीर्यहेतुस्तथायं भावोपीति भावः । 'तं यथा यथोपासत' इतिश्रुतेः 'भगवान् लक्ष्मीकलत्रः सेवितो भुक्तिं मुक्तिं च यच्छती'ति ज्ञात्वा ये हरेर्गुणान्वर्णयन्ति ते त्विक्षुरसोदतुल्यास्तेषां भाव इक्षुरसतुल्य इत्यर्थः । यथेक्षुरसो मधुरोन्तस्तापनिवर्तकस्तथायं भावोपीति भावः । 'यशःश्वानुद्धरेत् कृष्णो यादृशांस्तादृशानपि । सर्वथा शरणं यातानतः सेव्यः स एव ही'ति ज्ञात्वा ये हरेर्गुणान्वर्णयन्ति ते शुद्धोदतुल्यास्तेषां भावः शुद्धोदकतुल्य इत्यर्थः । यथा शुद्धोदकं तापनिवृत्तिनैर्मल्यतृप्त्यादिहेतुस्तथायं भावोपीति । भगवान् चिद्रूपो ज्ञानपूर्णो ज्ञानगम्यः सर्वसमो मोक्षार्थं सेव्य इति ज्ञात्वा ये हरेर्गुणान्वर्णयन्ति ते दधिमण्डोदतुल्यास्तेषां भावो दधिमण्डतुल्य इत्यर्थः । भगवान् वैराग्यपूर्णो न किंचिदपेक्षते गृह्णाति वा सर्वैः पाविश्यार्थं विहितत्वात्सर्वं समर्प्यते स्तूयते चेति ज्ञात्वा ये हरेर्गुणान्वर्णयन्ति ते क्षारोदतुल्यास्तेषां भावः क्षारजलतुल्यो, भगवद्वैराग्यस्य भिन्नरूपत्वादिति भावः । केवलसमुद्रदृष्टान्ते क्षारोदः शुद्धोदो वा ज्ञेयः ॥ १५$\frac{1}{2}$ ॥

पूर्णभगवदीयेष्वसुत्तमान्निरूपयन्ति गुणातीततयेति ।

गुणातीततया शुद्धान् सच्चिदानन्दरूपिणः ॥ १६ ॥
सर्वानेव गुणान्विष्णोर्वर्णयन्ति विचक्षणाः ।
तेऽमृतोदाः समाख्यातास्तद्वाक्पानं सुदुर्लभम् ॥ १७ ॥

> तादृशानां क्वचिद्वाक्यं दूतानामिव वर्णितम् ।
> अजामिलाकर्णनवद्विन्दुपानं प्रकीर्तितम् ॥ १८ ॥
> रागाज्ञानादिभावानां सर्वथा नाशनं यदा ।
> तदा लेहनमित्युक्तं स्वानन्दोद्गमकारणम् ॥ १९ ॥

ये भगवदीयाः 'तमु स्तोतारः' 'यस्मात्क्षरमतीतोऽहम्' 'मन्निष्ठं निर्गुणं स्मृतम्' 'लोकवत्तु लीला कैवल्य'मित्यादिश्रुतिस्मृतिपुराणन्यायैर्भगवन्नामरूपधर्माणां गुणातीतत्वं निश्चित्य भगवन्नाम सच्चिदानन्दात्मकं भगवान् क्षराक्षरातीतः पुरुषोत्तमो भगवन्निष्ठं सर्वं निर्गुणं भगवतो लोकवदपि या लीला सैव कैवल्यं मोक्षः फलरूपा गुणातीता स्मरणादिनान्येषां मोक्षसाधिका चेत्येवं निरूपणेन विष्णोः पुरुषोत्तमस्य सर्वानेव गुणान्नवनीतादिचौर्यगोचारण-वेणुवादनगोवर्धनोद्धरणादीनपि शुद्धान्गुणातीतत्वेन मायासंबन्धरहितान्नित्यान्सच्चिदानन्द-रूपवतो वर्णयन्ति तेऽमृतोदाः सुधासमुद्रतुल्याः समाख्याताः कथितास्तेषां भावः सुधातुल्य इत्यर्थः । ते भगवच्चौर्यादिप्रयोजनज्ञातारो, यतो विचक्षणाः, ततस्तद्वाक्यानां तेषां वचनामृतस्य पानमन्तर्निवेशनं तत उपदेशग्रहणं सादरश्रवणं च सुदुर्लभं सुतरां दुःप्रापम् । अत एव नामस्वरूपज्ञानार्थमेतादृशानामुपदेष्टृणामुपसत्तिः कार्येत्याशयेनाह श्रुतिः 'महस्ते विष्णो सुमतिं भजामहे' इति । ते स्वत्संबन्धिनं सुमतिं निर्दोषपूर्णगुणत्वेन भगवन्तं जानन्तं भगवद्भक्तमित्यर्थः । अत एव तत्त्वसागरेऽप्युक्तं 'दुर्लभे सद्गुरूणां तु सात्वत्सङ्ग उपस्थिते । तदनुज्ञा यदा लब्धा स दीक्षावसरो महानि'ति । अत एव नित्यानन्दमयपुरुषोत्तमत्वेन भगवत्स्वरूपाज्ञाने ज्ञानकर्मादिकं व्यर्थमित्याह भगवा'न्नवजानन्ति मां मूढा' इत्यारभ्य 'प्रकृतिं मोहिनीं श्रिता' इत्यन्तेन । नित्यानन्दमयपुरुषोत्तमत्वेन भगवज्ज्ञाने सर्ववित्त्वं सर्वभावेन स्वभजनं चोक्तं भगवता 'यो मामेवमसंमूढ' इति श्लोकेन । तद्वाचो महिमानमाहुः तादृशानामिति । पूर्णभगवदीयानां वाक्यं क्वचित् यत्र प्रसक्ततया स्वेच्छया वदन्ति, नत्वनुरोधेन प्रेरणया वा, तत्र दूतानां सन्देशहराणामिव वर्णितं ज्ञेयं, यथा दूतमुखेन राजा वदति, तथा तन्मुखेन भगवानपि दूतानामिव प्रभूत्कर्षवर्णने तेषां न शङ्का चेति भावः । अतो भगवत्कृपया फले भाविन्येतादृशानां समागमो भवति । अत एव श्रीभागवते 'भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युतसत्समागमः । सत्सङ्गमो यर्हि तदैव सद्गतौ परावरेशे त्वयि जायते मतिः । महद्विचलनं नृणा'-मित्यादि । अत एवैतद्वचनामृतबिन्दुपानमेभ्य उपदेशग्रहणं श्लोकमात्रश्रवणं शिक्षा वाप्यजामिलाकर्णनवत् । अजामिलस्य यदाकर्णनं विष्णुदूतेभ्यो भगवद्धर्मबलश्रवणं शिक्षा वा तद्वत् प्रकीर्तितम् । यथाजामिलस्य तदनन्तरं न पुनर्नरकसम्बन्धो भगवद्धर्माचरणेनोत्कृष्ट-फलप्राप्तिस्तथैतद्बिन्दुपानकर्तुरपीति भावः । यद्वा । अजामिलस्याकर्णनं यस्मिन् तदजामिलोपाख्यानं तेन यथा भगवद्रूपनामादिमाहात्म्यं ज्ञातं भवति, तथैतद्बिन्दुपानेनापि भवतीति

भावः । अत एव श्रीभागवते 'किरातहूणान्ध्रे'ति 'यत्पादपङ्कजे'ति । एतद्विन्दोः पानापेक्षया रसास्वादोधिक इति तत्परिचायकमाहुः **रागाज्ञानादिभावानामिति** । रागः स्नेहो गृहादिषु, अज्ञानं भगवत्स्वरूपस्य, आदिपदात् गृहाद्यासक्तिः, एतान्येव भावाः । यद्वा । अज्ञानमविद्या आदिर्येषां भावानां शोकमोहादीनां तेषां यदा सर्वथा नाशनं, तद्वासनापि न तिष्ठति, तदा लेहनं रसास्वादनं पूर्णमुक्तम् । यद्वा, रागाज्ञानादिभावानां यदा सर्वथा नाशनमस्फूर्तिस्तदेति । इदमेव विन्दोः पानं लेहनं रसास्वादनमुक्तम् । श्रवणादौ व्यसने सम्पन्ने तदेवास्वाद्यमानममृतं भवतीत्यर्थः । तत्स्वानन्दोद्गमकारणं स्वस्य यो भगवदानन्दस्योद्गमस्तस्य नित्यत्वात् तत्र कारणम् । 'रसं ह्येवायं लब्ध्वानन्दी भवती'ति श्रुतेः । स्वस्य तिरोहितानन्दस्य य उद्गमः प्राकट्यं ज्ञानफलं तत्कारणतुल्यं यत्रेति च । ब्रह्मभावानन्तरं भक्तिप्राप्तेः । भगवति क्रमेण प्रेमासक्तिव्यसनैः प्रापश्चिकास्फूर्तौ न किञ्चिदवशिष्यते । अत एवोक्तमेकादशे 'भक्तिं लब्धवतः साधोः किमन्यदवशिष्यते । मय्यनन्तगुणे ब्रह्मण्यानन्दानुभवात्मनि । एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिना'मित्यादिना च । तथोक्तं भक्तिवर्धिन्यां श्रीवल्लभाचार्यचरणैः 'स्नेहाद्रागविनाशः स्यादासक्त्या स्याद्गृहारुचिः । यदा स्याद्व्यसनं कृष्णे कृतार्थः स्यात् तदैव हि' ॥ १६–१९ ॥

**उद्धृतोदकवत्सर्वे पतितोदकवत्तथा ।**
**उक्तातिरिक्तवाक्यानि फलं चापि तथा ततः ॥ २० ॥**

विशेषं भावमाहुः **उद्धृतोदकवदिति** । अव्यवधानेनोक्तामृतोदतुल्यातिरिक्तानां वाक्यानि तथा तेषामेव सर्वे भावाश्च भाववतामप्रत्यक्षदशायामादरेण गृहीतानि वाक्यानि भावाश्चोद्धृतोदकवदुपकारं कुर्वन्ति । यथा कथञ्चिद्गृहीतानि पतितोदकवज्जलाशयात् पृथक् स्थितोदकवत् । अथवा, प्रासादादितः पतितोदकवदुपकारं कुर्वन्ति । अथवा । भगवदप्रत्यक्षदशायां सर्वे भावा अमृतोदतुल्यातिरिक्तानामुद्धृतोदकवत्फलं साधयन्ति । वाक्यानि च पतितोदकवत् फलं साधयन्तीत्यर्थः । ततस्तेभ्यो भावेभ्यो वाक्येभ्यश्च फलमपि तथा तदनुरूपमेवेत्यर्थः । यथोद्धृतजलानि स्वप्रभवगुणसदृशानेव गुणान् विदधते, न तु तानेव, तथा तत्तद्भावा अपि तत्तद्गुणसदृशान् गुणान् विदधते । सुधा तु सदैकरूपमेव गुणं विधत्त इति भावः ॥ २० ॥

**इति जीवेन्द्रियगता नानाभावं गता भुवि ।**
**रूपतः फलतश्चैव गुणा विष्णोर्निरूपिताः ॥ २१ ॥**

उपसंहरन्ति **इतीति** । इतीति समाप्तौ । अनेन प्रकारेण वा । जीव आत्मा इन्द्रियाणि च तेषु गताः प्राप्ताः । अत एव भुवि आधारे नानाभावं अनेकविधं सात्त्विकादिभावं गताः प्राप्ताः, नानात्वं वा प्राप्ताः, एतादृशा विष्णोर्भगवतो गुणास्तेषां भावानां भगवदीयत्वात् तद्रूपत्वाद्वा । रूपतः स्वरूपतः ईदृशमिति यत् स्वरूपमिति । फलत

इतीदृशमेतत्फलमिति निरूपिता विवेचिता इत्यर्थः ॥ २१ ॥

जलानामिव भावानां भेदा यत्र निरूपिताः । जलभेद इति ख्यातो ग्रन्थोयं भावबोधकः ॥१॥

श्रीविठ्ठलेशाङ्घ्रिसरोजपीठं कल्याणरायेण मुदा प्रणम्य ।
ताताङ्घ्रिपद्मे च गुरून् पितृव्यान् टीका कृतेयं जलभेदनाम्नः ॥ २ ॥

श्रीगोविन्दसुतप्रोक्ता टीका रागवतां हरौ । भावपूर्णा मुदे भूयात्सुन्दरीवाल्पभाषिणी ॥३॥

मृषोद्यमनवद्यं वा बालस्येव कृपालवः । क्षमन्तां विठ्ठलाधीशचरणाः प्रभवो मम ॥ ४ ॥

**इति श्रीविठ्ठलेश्वरचरणैकतानश्रीकल्याणरायविरचिता**
**जलभेदटीका सम्पूर्णा ॥**

---

श्रीकृष्णाय नमः ।

# जलभेदः ।

## श्रीपुरुषोत्तमकृतविवृतिसमेतः ।

नत्वा श्रीवल्लभाचार्यान् भगवन्तं च तद्गुणान् ।
गुणस्वभावबोधार्थां या वाचस्ता उपास्महे ॥ १ ॥

अथ श्रीमदाचार्यचरणाः भक्तिवर्धिन्यां त्यागिनां गृहस्थानां च भक्तिवृद्ध्यर्थं श्रवणरूपं कीर्तनरूपं च साधनमुक्त्वा तदर्थमर्थपलात्कीर्तयितुः श्रोतुश्च प्राप्ते सङ्गे स किं यस्य कस्यापि कर्तव्य उत भगवदीयत्वेन परीक्षितस्येत्याकांक्षायां यद्येकादशस्कन्धे 'स्वमूर्त्या लोकलावण्यनिर्मुक्त्या लोचनं नृणां, गीर्भिस्ताः स्मरतां चित्तं पदैस्तानीक्षतां क्रियाः, आच्छिद्य कीर्तिं सुश्लोकां वितत्य ह्यञ्जसा नु कौ, तमोनया तरिष्यन्तीत्यगात्स्वं पदमीश्वर' इति शुकवाक्ये भगवत्कीर्तेः संसारात्मकतमस्तारकत्वेन कथनात्तस्याश्च गुणजन्यत्वात्तेषामपि श्रूयमाणानां कीर्त्यमानानां स्मर्यमाणानां क्वचित् दृश्यमानानां च संसारतारकत्वमेवोचितं, भगवता तदर्थमेवानवनारदशायां कीर्तिद्वारा प्रकटनात्, 'साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा, वैकुण्ठनामग्रहणमशेषाघहरं विदु'रिति षष्ठस्कन्धे शुकवाक्यादजामिलस्य पुत्रोपचारितनामकीर्तनमात्रेणैव संसारत उद्धाराच, यस्य कस्यापि सङ्गः कर्तव्य इत्यङ्गीक्रियते, तदा 'भिक्षाशया ये गृह्णन्ति मम नामानि चार्जुन, अमुख्यास्ते जनाः पार्थ दूरतः परिवर्जये'दित्यादिपुराणवाक्येषु निन्दास्मरणस्य, सप्तमस्कन्धे समासौ, 'अहं पुराभवं कश्चिद्गन्धर्व उपबर्हण' इत्यादिभिर्नारदेन स्वपूर्वजन्मवृत्तान्तकथने गायतो गतस्य मत्तस्त्रीपरिवृतस्यपुरुलम्पटत्वैः स्वस्य विश्वसृग्दत्तशापकथनस्य च कथमविरोधः । किञ्च, प्रथमस्कन्धे नारदेन स्वस्य शूद्रजन्मनि योगिसङ्गतदुक्तभगवत्कथाश्रवणाभ्यां स्वस्य भ-

गवद्रत्यादिकथन, एकादशस्कन्धे च भगवता कथाश्रवणाद्यर्थं सत्सङ्गस्यैव कथन च कथ सङ्गच्छते, तथा गुणकर्मानुरूपभगवन्नामोच्चारयितृणा भिक्षाशामात्रेण कथ निन्दत्व, गुणगातुरुपबर्हणस्य च कथ विश्वगम्य शाप । किंचैव भावभेदेन नामाद्युच्चारयितृणा गुणगातृप्रभृतीना च स्वरूपभेदे फलभेदे चावगम्यमाने कथ द्विविधवाक्यानामविरोध इति सन्देहे स्वीयाना जाते तद्वारणार्थं 'तदभिध्यानादेव तु तल्लिङ्गात् स' इति न्यायेन भगवानाकाशादिभूतेष्वाधारेषु तत्तद्रूपेण स्थित्वा तत्तत्कार्यं करोति, तथा भगवद्गुणा अपि भगवद्रूपस्वाद्भौतिकेषु तत्तद्भावरूपेष्वाधारेषु तत्तद्रूपेण स्थित्वा तत्तद्भावानुसार्येव कार्यं कुर्वन्तीति भगवद्गुणानामाधारवशेन फलत स्वरूपतश्च नानाप्रकारता वदिष्यन्तस्तदाधारनिरूपण प्रतिजानते **नमस्कृत्येति** ।

**नमस्कृत्य हरिं वक्ष्ये तद्गुणानां विभेदकान् ।**
**भावान्विंशतिधा भिन्नान्सर्वसन्देहवारकान् ॥ १ ॥**

**हरिं** 'हरत्यघ यस्सत्कृणा'मिति[1] भारतवाक्यात्स्मरतामघहर्तार भगवन्त **नमस्कृत्य, तद्गुणानां** तच्छब्दस्य सन्निहितपरामर्शित्वात्तस्य हरे गुणानामुत्कर्षाधायकानाम् धर्माणा **विभेदकान्** विशब्दो नानार्थे नानाभेदजनकान् विंशतिप्रकारेण **भिन्नान्, सर्वसन्देहवारकान्** गुणस्वरूपफलविषयका सर्वे पूर्वोक्तप्रकारका अन्ये च ये तादृशा सन्देहाक्षेपा निवर्तकान् भावान् जीवाना मनोविकारान् वक्ष्ये कथयिष्यामि । अत्र सर्वसन्देहवारकानितिविशेषणेन सन्देहनिवृत्तिरूपफलसूचनात्तदर्थं गुणाधारभूतान् भावान् वक्ष्यामीत्यर्थं । न चात्र गुणेषु तदभिध्यानन्यायाङ्गीकारे किं मानमिति शक्यम्, उपसहारवाक्ये, 'इति जीवेन्द्रियगता नानाभाव गता भुवी त्यत्र जीवेन्द्रियगताना नानाभावप्राप्तिकथनेन तदभिध्यानसूत्रोक्तन्यायस्यैव सूचितत्वादिति ॥ १ ॥

नन्वाधाराणा जीवेन्द्रियधर्मत्वेनानन्त्यात्कथ विंशतिधाभिन्नत्वमेव प्रतिज्ञायत इत्याकाङ्क्षाया बोधसौकर्यार्थं श्रौतवासनया दृष्टान्तेन तथा भिन्नत्व बोधयन्त्यर्थेन **गुणभेदा** इत्यादि ।

**गुणभेदास्तु तावन्तो यावन्तो हि जले मताः ॥ १½ ॥**

तु शङ्कानिरासे, उक्तसंख्याविषयिणी शङ्का न कार्या, हि यतो हेतो **गुणभेदास्तावन्तः यावन्तः** यत्सख्याका जले मता श्रुतिसमता । तथा चाधारानन्त्येपि यथा जलस्य विंशतिभेदास्तथा गुणानामपि । जल हि शैत्यगुणक स्वच्छ अव्यक्तमधुररस सर्वशोधक स्वसम्बन्धेन द्रव्यान्तरस्य मृदुत्वापादकमाप्यायक च स्वभावत सदपि यादृगाधारे पतति तादृक्स्वभाव लोके भवति, गुणदोषौ च जनयति, तथा गुणा अपि स्वभावत एकविधा आनन्दरूपा ब्रह्मण सकाशात्प्रकाशाश्रयन्यायेन भिन्नाभिन्ना अप्यनेकस्वभाववत्तामनेकगुणदोषवत्ता चापद्यन्त इति तद्दृष्टान्तेन तथोच्यते । श्रौतदृष्टान्तस्यैव बोधार्थमङ्गी-

[1] हरत्यघ यत्सत्कृणां हविर्भाग क्रतुष्वह । वर्णश्च मे हरिश्रेष्ठस्तस्मादह हरि स्मृत ।

कारादिस्त्वर्थः । तत्र तैत्तिरीयसंहितायां सप्तमकाण्डे 'कूप्याभ्यः स्वाहा, कूल्याभ्यः स्वाहा, विकर्याभ्यः स्वाहा, अवट्याभ्यः स्वाहा, खन्याभ्यः स्वाहा, ह्रद्याभ्यः स्वाहा, सूद्याभ्यः स्वाहा, सरस्याभ्यः स्वाहा, वैशन्तीभ्यः स्वाहा, पल्वल्याभ्यः स्वाहा, वर्ष्याभ्यः स्वाहा, अवर्ष्याभ्यः स्वाहा, ह्रादुनीभ्यः स्वाहा, पृष्व्याभ्यः स्वाहा, स्यन्दमानाभ्यः स्वाहा, स्थावराभ्यः स्वाहा, नादेयीभ्यः स्वाहा, सैन्धवीभ्यः स्वाहा, समुद्रियाभ्यः स्वाहा, सर्वाभ्यः स्वाहेति मन्त्रेषु विंशतिविधा आप अपां होमे उक्ताः ॥ १½ ॥

तत्र प्रथमं कूप्या उक्ता इतीहापि कूपसमानं गुणाधारं प्रथममेकेनाहुः **गायका** इत्यादि ।

**गायकाः कूपसंकाशा गन्धर्वा इति विश्रुताः ॥ २ ॥**

**कूपभेदास्तु यावन्तस्तावन्तस्तेऽपि संमताः ।**

**गायका** गानकर्तारः **कूपसंकाशाः** कूपोपमाः, कूपाश्च केचिदुत्तमाः यथा स्कान्दे पुरुषोत्तममाहात्म्ये, 'न्यग्रोधादुत्तरे कूपः सर्वतीर्थमयोऽस्ति वै,' यथा च द्वारकायामधन्यां च दामोदरकूपः, केचिच्च कदाचिदुत्तमाः, यथा व्रजे गोपकूपः, 'सोमवत्याममायामेव सर्वतीर्थमयो नान्यदा', एवं साधारणा अप्रयोजकाश्च ज्ञातव्याः, तथा गायका अपि, तेपि न साधारणाः, किन्तु **गन्धर्वा** इति पुराणे वेदे च श्रुताः विशेषेण प्रसिद्धाः । [illegible] पुनः यावन्तः कूपभेदास्तावन्तस्ते गन्धर्वा अपि संमताः सम्यग्विचारिताः । तथा च कूपे भवाः कूप्यास्ता यथा कूपरूपाधारभेदेन रूपतः फलतश्च नानाविधा भवन्ति, एवं गन्धर्वैर्गीयमाना गुणा अपि गन्धर्वस्य भगवद्भक्तत्वे तदभक्तत्वे साधारणत्वे लम्पटत्वादिदोषविशिष्टत्वे च तद्भावसमानाकारा भवन्तस्तदनुरूपमेव फलं जनयन्ति । एतेनोपबर्हणस्य शापोऽन्येषां गन्धर्वाणां शापाभावः 'भिक्षाशया ये गृह्णन्ती'तिवाक्यं च समर्थितं ज्ञेयम् । तेन 'गुणगाने सुखावाप्ति'रित्यादिना निरोधलक्षणग्रन्थे गुणगातॄणां स्वरूपफलोत्कर्षौ यावुक्तौ तावपि 'निवृत्ततर्षैरुपगीयमाना'दिति श्लोकोक्तरीतिकेष्वेव पर्यवस्यत इति बोधितम् । इदं 'पूर्णा भगवदीया य' इत्यत्र स्फुटिष्यति ॥ २½ ॥

कूल्याभ्यः स्वाहेति श्रुतिमनुसृत्य द्वितीयं भावमाहुः **कुल्या** इत्यादि ।

**कुल्याः पौराणिकाः प्रोक्ताः पारंपर्ययुता भुवि ॥ ३ ॥**

श्रुतौ कूल्या इति दीर्घः छान्दसो वर्णविकृतिरूपः । **पौराणिकाः कुल्याः प्रोक्ताः** 'कुल्या स्यात् कृत्रिमा सरि'दिति कोशात् महतो जलाशयात् अन्यत्र जलानयनार्थं या कृत्रिमा नदी क्रियते सा कुल्या । पौराणिकाः पुराणवाचयितारस्ताः प्रोक्ताः । अत्रोपमावाचकपदाभावाद्रूपकं ज्ञेयम् । 'उपमैव तिरोभूतभेदा रूपकमिष्यते' इति काव्यादर्शे लक्षणात्तथापीदमाधिक्यन्यूनत्वयोरनुक्तत्वादनुभयोक्तिरूपकं ज्ञेयम् । केषाञ्चिदलङ्काराणां किञ्चित्प्रयोजनार्थं शास्त्रेऽङ्गीकारस्तानुमानिकसूत्रे तद्विषयश्रुतौ च दर्शनादिति । एवमग्रेपि बोध्यम् । पौराणिकानां कुल्यातौल्ये हेतुगर्भं विशेषणमाहुः **पारंपर्ययुता भुवी**ति । तथा

च भूमिष्ठत्वात्परंपरया मूलसम्बन्धाच्च ते कुल्यातुल्या इत्यर्थः । तेन यादृश्य आपः कुल्यायां भवन्ति तादृशस्तेषां भावः । ता यथा नद्यादिरहिते देशे कृत्रिमोपायेन नीताः प्रवहन्त्यः पानस्नानाचमनादिरूपपरोपकाराय भवन्ति, तथा तेषां भावोपि । पाद्मे माघमाहात्म्ये वैश्यं प्रति देवदूतवाक्यजाते 'विचारयन्ति ये शास्त्रं वेदाभ्यासरताश्च ये । पुराणसंहितां ये च श्रावयन्ति पठन्ति च । व्याकुर्वन्ति स्मृतिं ये च ये धर्मप्रतिबोधकाः । वेदान्तेषु निविष्टा ये तैरियंजगती धृता । तेषामभ्यासमाहात्म्यैः सर्वे ते हतकिल्बिषाः । गच्छन्ति ब्रह्मणो लोकं यत्र मोहो न विद्यते । ज्ञानमज्ञाय यो दद्याद्वेदशास्त्रसमुद्भवं । अपि देवास्तमर्चन्ति भवबन्धविदारक'मिति पौराणिकानामुत्कृष्टत्वकथनात् । अत्र भुवीतिकथनात् पूर्वश्लोकोक्ताः स्वर्गस्था इति बोधितम् । अन्यथा तद्वैयर्थ्यापातादिति ॥ ३ ॥

अतः परं 'विकर्याभ्यः स्वाहे'ति श्रुतिमनुसृत्य तृतीयं भावमाहुः क्षेत्रेत्यादि ।

**क्षेत्रप्रविष्टास्ते चापि संसारोत्पत्तिहेतवः ।**

च पुनः ते पौराणिका अपिशब्दाद्गन्धर्वाः क्षेत्रप्रविष्टाः, क्षेत्रशब्देन यथा केदार उच्यते, तथा 'क्षेत्रं पत्नीशरीरयो'रिति कोशात् 'बलेः क्षेत्रे महीभुज' इति 'इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयत' इत्यादिवाक्याच्च शरीरपत्न्यावप्युच्येते । एवं सति कृत्रिमजलमार्गे कृते तद्द्वारा केदारप्रविष्टाः कुल्याया आपो यथा उप्तस्य बीजस्य वृक्षस्य वा यः संसारः अभिवृद्धिः तदुत्पत्तिहेतवो भवन्ति, तथा पौराणिका गन्धर्वाश्च स्वदेहे पत्न्यां चाभिनिविष्टाः संसारस्याहन्ताममतात्मकस्योत्पत्तिहेतवो भवन्ति । अतस्तेषां भावो विकर्यातुल्यः । कॄ विक्षेपे, ऋदोरप्, विशेषेण विविधं वा कीर्यते विक्षिप्यते असौ विकरः, केदारे कुल्याजलानयनार्थं कृतो मार्गस्तत्र भवाः विकर्याः, ता यथा क्षेत्रिभिः स्वान्नसिद्ध्यर्थं यतस्ततो नीयन्ते तथा तद्भावा अपीति । तादृशा गन्धर्वपौराणिकाः विकरतुल्या इत्यर्थः । एवं च द्वितीयस्कन्धसुबोधिन्यां कामनाकरणमुपक्रम्य 'वसुकामो वसून् देवा'नित्यस्य द्वितीयव्याख्याने यदुक्तम् । 'एवं धनस्यापि, भगवद्भक्तेष्वानत्यर्थं श्रवणादिसिद्ध्यर्थं उपदेशनार्थं वा देयमपेक्ष्यते, साधनरूपश्रवणादिकं तादृशैरेव भवती'ति । तत्रापि धनदातुः सत्फलं प्रतिगृहीतुस्तु संसारोत्पत्तिः । 'भिक्षाशये'ति वाक्यात् । यदि तु तत्त्वविचारार्थमुदरभरणोपयोग्यन्नमात्रं गृह्णाति, तदा तु तीर्थपर्यटितृवन्न दोष इति बोध्यम् । एतदपि तदा यदा पौराणिकानां पारंपर्यंशुतत्वं भवति । तदभावे तु वक्तृश्रोत्रोरुभयोरपि संसार एव । स्वबुद्ध्यान्यथाव्याख्यानान्यथाबोधयोः संभवाच्चेति ज्ञेयम् । ननु ब्रह्मवैवर्ते श्रीकृष्णजन्मखण्डे 'कल्याणसूक्तसामानि हरेर्नामैकमङ्गलम् । कुर्वन्ति विक्रयं ये वै तेषां भारेण पीडिते'ति ब्रह्माणं प्रति पृथिवीवाक्यात्, 'मन्नामविक्रयी विप्रो न हि मुक्तो भवेत् ध्रुवं । मृत्युकाले च मन्नामस्मृतिमात्रं न विद्यते' इति श्रीनन्दं प्रति भगवद्वाक्याच्च, नामविक्रयस्य दोषत्वे शिष्येभ्यो भगवन्नामोपदेशस्यापि दोषत्वापत्तिः । तत्र

शिष्योपढौकितग्रहणेन नामविक्रयसंभवादिति चेत्। सत्यम् । तथापि गुरुत्वस्य साहजिकब्राह्मणवृत्तित्वेनात्याज्यत्वात्, 'सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् । सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः' इति भगवद्वाक्यात् । श्रुतावपि षडाचार्यब्राह्मणारम्भे जनकसमीपे याज्ञवल्क्य आगते जनकेन, 'याज्ञवल्क्य ! किमर्थमचारीः पशूनिच्छन्न' 'एवं ता'निति गोर्थं सूक्ष्मवस्तुनिर्णायकप्रश्नान्मत्तः कारयितुं वागतोसी'ति पृष्टे याज्ञवल्क्येन 'उभयमेव सम्रा'डित्युक्त्वा, राजप्रश्ने अब्रवी'न्म उदङ्कः शौल्वायन' इत्यादिना प्राणब्रह्मविद्योपदिष्टा, ततो जनकेन हस्त्यृषभसहस्रं ददामीत्युक्ते याज्ञवल्क्येन 'पिता मेमन्यत नाननुशिष्य हरेते'त्युक्त्वा पूर्णा ब्रह्मविद्योपदिष्टा, ततो जनकेन विदेहाः स्वात्मा च याज्ञवल्क्याय समर्पितः, तदा याज्ञवल्क्यस्तदङ्गीकृतवानिति श्रावितत्वेन ब्रह्मविद्योपदेशोत्तरं शिष्योपढौकितग्रहणस्य प्राप्ततया तन्न्यायसत्त्वात्रापि वक्तुं शक्यत्वाच्च । किञ्च, गीतायामेव सहजकर्मात्यागमुक्त्वा, 'असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः । नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छती'त्यत्र असक्तबुद्धित्वादिभिस्तत्कर्मसंन्यासेन नैष्कर्म्यसिद्धिप्राप्तिं कथयता भगवता तद्दोषपरिहारोपायस्योक्तत्वाच्च तथा करणे दोषाभावादिति । एवञ्च यत्प्रभुचरणैरुक्तं 'विचार्यैव सदा देयं कृष्णनाम विशेषतः । अविचारितदानेन स्वयं दाता विनश्यती'ति । तथापि स्वस्य शिष्यस्य चोद्धारं विचार्यैव देयम् । लोभादविचारितदाने तु नामविक्रयापत्त्या दाता स्वयमपराधभाग्भवतीत्यर्थो ज्ञेयः । प्रकृतमनुसरामः । तेन गन्धर्वाणां पौराणिकानां च सङ्गस्तत्स्वरूपं विचार्य कार्यं इति बोधितम् ॥ ३३ ॥

अतः परं 'अवधाम्यः स्वाहे'ति श्रुतिमनुसृत्य चतुर्थं भावमाहुः वेश्यादीत्यादि ।

**वेश्यादिसहिता मत्ता गायका गर्तसंज्ञिताः ॥ ४ ॥**

आदिपदेन स्वैरिणीसङ्ग्रहः । ईदृशाः गायकाः गर्तसंज्ञिकाः । गर्तलक्षणं तु कात्यायनस्मृतौ 'धनुःसहस्राण्यष्टौ तु तोयं यासां न विद्यते । न ता नदीशब्दवहा गर्तास्ते परिकीर्तिताः' इति । आपः नदीसम्बन्धिन्योपि नदीशब्दवहा न, किन्तु ते जलाशया गर्ताः शास्त्रेषु सर्वत्र कीर्तिता इत्यर्थः । तथा च 'नद्या यच्च परिभ्रष्ट'मित्यादिवाक्यान्तरात् तज्जलं बहुलमपि न शिष्टानां स्नानपानादियोग्यम् । तथा तादृशो भावोपीत्यर्थः । यद्वा, 'प्रह्लादो ह वै कायाधवः विरोचनं स्वपुत्रमुदास्यत्, स प्रदरोऽभवत्, तस्मात्प्रदरस्य नाचामे'दिति श्रुतावापस्तम्बस्मृतौ च न वर्षधारास्वाचामेत्तथा च प्रदरोदक इति तज्जलाचमननिषेधात् । तत्र 'प्रदरो गर्त' इति सायणीयादौ व्याख्यानात्तेषामापोऽवद्याः, न उद्यन्त इत्यवद्याः पूर्वोक्तश्रुतिस्मृतिभ्यां तदाधारनिन्दातः ता अपि निन्द्या इत्यर्थः । तादृशो भावस्य दुष्टत्वात्तद्गीता गुणा न समीचीनफलदाः गातॄणां श्रोतॄणां चेति तादृशां सङ्गो न कर्तव्य इति भावः ॥ ४ ॥

अतःपरं 'खन्याभ्यः स्वाहे'ति श्रुतिमनुसृत्य पञ्चमं भावं वक्तुमन्यानपि ततो हीनानाहुः जलार्थमित्यादि ।

**जलार्थमेव गर्तास्तु नीचा गानोपजीविनः ।**

हस्तपादप्रक्षालनगण्डूषादिदुष्टजलस्य सर्वत्र प्रसाराभावार्थं ये गर्ताः कृतास्तादृशाः । तथा च तज्जलं न समीचीनं योग्यम् । जात्या नीचाः गानोपजीवनेनैव ये उदरंभरयस्ते यथा तथा तेषां भावोपीति तद्गता गुणा अपि तादृशा इति तत्सङ्गो न कार्य इति भावः । श्रुतौ 'अवद्याभ्यः स्वाहे'त्यनन्तरं 'खन्याभ्यः स्वाहे'त्युक्तम् । अत्र खननेन निष्पन्ना आपः खन्या इति व्याख्यानम् । तथा सति तत्सङ्ग्रहार्थमत्रापि प्रकारान्तरेण पुनर्व्याख्येयम् । तुशब्देन तथा सूचनात् । तथा च नीचा गानोपजीविनः जलार्थमेव गर्ताः । तु पुनः नीचा गानोपजीविनः जलार्थमेव गर्ता इति । एतस्मिन् पक्षे चायमर्थः । जलार्थं जलनिष्पादनार्थं खननेन निष्पादिता ये गर्तास्ते जलार्थमेव गर्ताश्चोद्राणीति यावत् । नीचा गानोपजीविनस्तादृशाः तेषु नीचत्वं जातिदोषः, गानोपजीवित्वं च कर्मदोष इति । चोद्रजलं पुनः खननात्कलुषं निर्मलमपि संस्कारं विना नानाजातीयजनोच्छिष्टसंसर्गदोषाच्च यथा शिष्टायोग्यं, तथा तद्भावनिविष्टा गुणा अपि स्वरूपतः फलतश्च दुष्यन्तीति तादृशामपि सङ्गो न कार्य इति बोधितम् । एवं पञ्चविधा भावा उक्ताः । एवमत्र गातृविषयकाः सन्देहा निवारिताः ॥४½॥

अतः परं कीर्तयितृविषयकांस्तान् निवारयितुं 'ह्रद्याभ्य स्वाहे'ति श्रुतिमनुसृत्योत्तमं षष्ठं भावमाहुः ह्रदास्त्वित्यादि ।

> **ह्रदास्तु पण्डिताः प्रोक्ता भगवच्छास्त्रतत्पराः ॥ ५ ॥**
> **सन्देहवारकास्तत्र सूदा गंभीरमानसाः ।**
> **सरःकमलसम्पूर्णाः प्रेमयुक्तास्तथा बुधाः ॥ ६ ॥**
> **अल्पश्रुताः प्रेमयुक्ता वेशन्ताः परिकीर्तिताः ।**
> **कर्मशुद्धाः पल्वलानि तथाल्पश्रुतभक्तयः ॥ ७ ॥**

अत्र तुशब्दः प्रकरणं भिनत्ति । पण्डा शास्त्रजन्या बुद्धिः सामीप्यार्थग्राहिका च तद्वन्तः पण्डिताः प्रकर्षेण पुराणादिपूक्ताः । शास्त्रदर्शित्वेपि विशेषमाहुः भगवच्छास्त्रतत्परा इति । भगवता प्रोक्तं शास्त्रं गीताश्रीभागवतपञ्चरात्रवाराहपुराणादि तन्निष्ठाः ये ते ह्रदाः । 'जलाशयो जलाधारस्तत्रागाधजलो ह्रद' इति कोशात् महान् जलाशयो ह्रदः, पर्वतैकदेशमूलो नदीसंलग्नः । 'कालिन्द्यां कालीयस्यासीत् ह्रद' इति 'शुष्यद्ह्रदाः कृशतटा धत सिन्धुपत्न्य' इत्यादौ तादृशेष्वेव ह्रदपदप्रयोगात् । तथा च तेषां भावे निविष्टा भगवद्गुणा अपि ह्रद्यजलतुल्याः । तद्यथा सर्वकार्येषु स्वरूपतः प्रशस्तं फलतश्चोत्तमं, तथा तैर्विचार्यमाणास्तेभ्यः श्रूयमाणाश्च गुणाः स्वरूपतः फलतश्चोत्तमा इत्यर्थः । अत्रापि 'विचारयन्ति ये शास्त्रं वेदाभ्यासरताश्च ये' इति पूर्वोपन्यस्तमाघमाहात्म्योक्तं स्वरूपवाक्यं फलवाक्यं चानुसन्धेयम् । सूद्याभ्यः स्वाहेति श्रुतिमनुसृत्य तस्मादुत्कृष्टं सप्तमं भावमाहुः सन्देहेत्यादि । तत्र तेषु भगवच्छास्त्रतत्परेषु येऽज्ञानां श्रोतॄणां भगवच्छास्त्रविषयकं सन्देहं वार-

यन्ति, ते सूदाः, सुष्ठु समीचीनं स्वादु सद्गुणं उदमुदकं येषां ते सूदाः । तत्र हेतुमाहुः **गंभीरमानसा** इति । अगाधं दुरवगाहं हृदयं येषां तादृशाः । तथा च श्रोतुर्हृदयं बुद्धा तदधिकारानुसारेण तद्धितं बोधयन्ति, न तु सर्वं शास्त्रार्थमित्यर्थः । तेन यादृशं जलमुक्तं तादृशस्तेषां भावः स्वरूपतः फलतश्चोत्तम इति तादृशां सङ्गः कर्तव्य इति भावः । अत्रापि 'पूर्वोक्तज्ञानमज्ञाय यो दद्या'दिति वाक्यं 'गच्छन्ति ब्रह्मणो लोक'मिति तत्फलवाक्यं चानुसन्धेयम् । एवमत्र मर्यादामार्गीयं भावद्वयमुक्तम् । श्रीकल्याणरायास्तु 'सूदा इत्यनेन वाप्योदा उच्यन्त' इति पक्षान्तरमाहुः । तदा तस्मिन् पक्षे गंभीरत्वं निम्नत्वं सन्देहवारकत्वं च तत्र सोपानस्थानापन्नं ज्ञेयम् । तत्रैव श्रोतॄणां विशेषतस्तत्सङ्गादिति । अतः परं 'सरस्याभ्यः स्वाहे'ति श्रुत्यनुसारेण तत उत्कृष्टं पुष्ट्यनुष्ठतमष्टमं भावमाहुः **सर** इत्यादि । भगवति प्रेम्णा युक्ताः निवृत्तलौकिकरागाः, तथा पूर्वोक्तवत् बुधाः भगवच्छास्त्रतत्पराः श्रोतुः सन्देहवारकाः ये ते सरःकमलसंपूर्णाः, सरसि यानि कमलानि तैः सम्पूर्णा सम्यग्भरिता या आपस्तादृशाः । न च श्रुतौ सरस्यापदेन सरोविकरणकत्वमात्रलाभादत्र कमलसम्पूर्णत्वस्य कुत उक्तिरिति शंक्यम् । सरस्यापदस्य 'सारसं सरसीरूह'मिति कमलनामस्मारणेन तत्संबन्धार्थमेव तत्प्रयोगात् । अन्यथा ह्रदास्याभ्यां विशेषाभावात्सदनुक्तेलापत्तेरिति बोध्यम् । अत्र पूर्वं जलधाराणां दृष्टान्तत्वमुक्त्वात्र यदाप एव दृष्टान्तत्वेन सूचितास्तेन तेषां भावच्यात्वं सूच्यते । तथाच यथा ता आपः सौगन्ध्यभ्रमरझंकारप्रभृतिभिः सर्वेन्द्रियाह्लादिन्यस्तथा तेषां भावोपि श्रोतृषु ज्ञानभक्ती संक्रामयन् तेषां सर्वेन्द्रियाह्लादी भवति, फलतश्चोत्कृष्यत इति तद्वता गुणास्तयेत्यर्थः । अत एवैकादशस्कन्धे संवादसमाप्ती भगवतोक्तं 'य एतन्मम भक्तेषु संप्रदद्यात्सुपुष्कलं, तस्याहं ब्रह्मदायस्य ददाम्यात्मानमात्मने'ति । अतःपरं 'वैशन्तीभ्यः स्वाहे'ति श्रुतिमनुसृत्य ततो न्यूनं नवमं भावमाहुः **अल्पश्रुतर** इत्यादि । अल्पं श्रुतमध्ययनं श्रवणं वा सत्पुरुषवाक्यसम्बन्धि येषां ते अल्पश्रुताः भगवद्विषयकप्रेमयुक्ताश्च । ते वेशन्ताः अल्पसरस्तुल्याः । 'वेशन्तः पल्वलं चाल्पसरे' इति कोशात् । 'विश प्रवेशने विशन्त्यस्मिन् भेकादय' इति निरुक्तेश्च । अत्र चाल्पश्रुतप्रेमयुक्तपदयोः समभिव्याहाराद्रूक्तावपि स्वल्पत्वं सूच्यते । तेन 'वैशन्तीभ्यः स्वाहे'ति श्रुत्युक्ता या आपस्तत्तुल्यस्तेषां भाव इति बोधितम् । तथा च प्रेमवत्त्वेन पूर्वोक्तजातीयत्वेप्यल्पत्वात्तया तज्जलं महिषादिभिरवगाढं कलुषं भवति, तथा तद्भावोपि श्रुतप्रेम्णोरल्पत्वाद्विजातीयशास्त्रादिसंसर्गेण कलुषितो भवतीति तत्सङ्गोऽप्रयोजक इत्यर्थः । अतः परं 'पल्वल्याभ्यः स्वाहे'ति श्रुत्यनुयतं वेशन्तसजातीयं दशमं भावमाहुः **कर्म** इत्यादि । श्रुतं च भक्तिश्च श्रुतभक्ती, तथा पूर्वोक्तादल्पे श्रुतभक्ती येषां ते तथाल्पश्रुतभक्तयः । पूर्वोक्तादिशेषः **कर्मशुद्धा** इति । भगवदर्पितेन फलाभिसन्धिरहितेन कर्मनिर्दोषोदेशतो वा कृत्स्नेन कर्मणा शुद्धाः तदनुरूपचित्तशुद्धियुक्ताः पल्वलानि । वेशन्तापल्व-

लयोः शक्यतावच्छेदकतौल्येपि श्रुतौ 'पल्वल्याभ्यः स्वाहे'ति निर्देशभेदात् पलगतौ पलति पल्यते वेति निरुक्तिभेदाच्च तयोः कश्चित् भेदो वाच्यः । स चात्र कर्मशुद्धिभेदादवगन्तव्यः । तेनैवं पूर्वस्मादाधिक्येपि गन्तृत्वान्महिषादिगम्यतया कालुष्याच्च तत्तुल्यकक्षत्वमेव । तथा च तेषां भावस्तज्जलतुल्य इति तत्सङ्गोप्यप्रयोजक इत्येवार्थः । एवमत्र कीर्तयितृविषयकाः सन्देहा निवारिताः । कीर्तयितृषु च श्रोतृणामुपकाराय वाच एव प्राधान्यात्तस्याश्च बहिरिन्द्रियत्वात्तदाधारभूतस्थूलदेहे प्राधान्येन गुणाधारा एव जलाधारसाम्येन निरूपिताः ।

अतः परं भावयितृविषयकान् सन्देहान् वारयितुं तेषु लिङ्गशरीरस्य मनस एव प्राधान्याद्गुणा विशेषतो बहिर्न निर्गच्छन्तीति दुर्लभत्वाद्गुणानामेव जलतुल्यत्वं निरूपयन्तो 'वर्ष्याभ्यः स्वाहे'ति श्रुतिमनुसृत्य पूर्वस्माद्विलक्षणमेकादशं भावमाहुः योगेत्यादि ।

**योगध्यानादिसंयुक्ता गुणा वर्ष्याः प्रकीर्तिताः ।**

योगश्चित्तवृत्तिनिरोधो, यमाद्यष्टाङ्गसहितः । यथा द्वितीयस्कन्धे प्रथमाध्याये 'शुद्धाश्वमजितो धीर' इत्यादिना स्थूलभगवद्विषयकधारणावानुक्तः । 'यतः सन्धार्यमाणायां योगिनो भक्तिलक्षणः । आशु संपद्यते योग आश्रयं भद्रमीक्षत' इत्यनेन तस्यापि भक्तिसाधकत्वोक्तेः । ध्यानं सप्रयत्नश्चित्तव्यापारः । यथा 'केचित्स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम् । चतुर्भुजं कञ्जरथाङ्गशङ्खगदाधरं धारणया स्मरन्ती'त्यादिपूर्वकं, आदिपदेन धारणा, एतैस्त्रिभिः समुच्चितैरेकैकेन वा संयुक्ता भगवतो गुणा योगप्रभावादयो रूपलीलादयश्च । कपिलदेवैः 'स्थितं व्रजन्तमासीनं शयानं वा गुहाशय'मिति ध्यानविषये लीलानामप्युक्तत्वात् । तादृशा गुणा वर्ष्याः वृष्टिर्वर्षस्तत्सम्बन्धिन्य आपो वर्ष्याः, ता यथा दिव्याः भूमौ पतन्त्यो जलाशयान् स्वकाल एव भरन्ति, तथा योगादियुक्ता भगवद्गुणा अपि योगिषु वर्तमानाः भूमौ दुर्लभाः अधिकारिविशेषान् कृतार्थयन्ति, न सर्वानित्यर्थः । यद्यपि वृष्टिजलं क्षेत्रादौ पतितं सत् संसारहेतुर्भवति, तथापि सोंशो नात्र दृष्टान्तफलतयाभिप्रेतः । तेषां योगित्वादन्तर्निष्ठत्वेन तथात्वस्य वक्तुमशक्यत्वात्, कुयोगित्वापातेन विदूरकाष्ठवत्पाताच्च, 'वैराग्यं सांख्ययोगौ च तपो भक्तिश्च केशवे, पञ्चपर्वेति विद्येयं यया विद्वान् हरिं विशेदि'ति निबन्धे योगस्य विद्यापर्वत्वेनोक्ततयात्रोत्कर्षार्थं तद्ग्रहणाच्च । दार्ष्टान्तिकतयात्र गुणानामेवोक्तत्वाच्च । अन्यथा तु भावकथनस्योपक्रान्तत्वेन तद्विरोधापत्तेश्च । तस्मात्पूर्वोक्तमेव दृष्टान्तफलं ग्राह्यम् । इतः पूर्वं कर्मशुद्धानामुक्तत्वादत्र तत्प्रसङ्गेन योगस्मरणं, योगस्यापि कर्मविशेषत्वादिति ॥ ७½ ॥

अतःपरं 'मवर्ष्याभ्यः स्वाहे'ति श्रुतिमनुसृत्य कर्मसम्बन्धिनमेव द्वादशं भावमाहुः तप इत्यादि।

**तपोज्ञानादिभावेन स्वेदजास्तु प्रकीर्तिताः ॥ ८ ॥**

तुः प्रकरणभेदकः । 'तप सन्तापे,' शरीरेन्द्रियादिकं तपति यत्कर्म कृच्छ्रचान्द्रायणानशनादिरूपं तत्तपः, ज्ञानं सेश्वरसांख्यादिसिद्धं, आदिपदेन त्यागः, तेषां भावेन वि-

धमानतया संयुक्ता ये गुणास्ते स्वेदजाः प्रकीर्तिताः । अत्र योगध्यानादिसंयुक्तपदैकदेशभूतं संयुक्तं पदमनुषज्जते । तथा च तादृशा गुणाः स्वेदजाः प्रकीर्तिताः, 'ष्विदा गात्रप्रक्षरणे,' धर्मश्रमादिना सन्तप्ताद्गात्रात्स्रुतं यज्जलं सः स्वेदस्तस्माज्जाता वर्षजलभिन्नत्वेपि बिन्दुरूपत्वाद्वर्ष्यतुल्या अवर्ष्याः या आपो वस्त्रादावेकीभूतास्तत्तुल्याः । ता यथा न समीचीनव्यवहारयोग्याः, किन्तु तद्गात्रस्यैव तापनिवारिकाः, नान्यस्य, एवं तद्गता गुणा अपीत्यर्थः । तेन तादृशामपि सङ्गो न प्रकृतोपयोगी । तपआदिष्वेव विशेषाभिनिवेशेन गुणानां गौणत्वात्क्वचिन्मुख्यत्वेपि प्रकृतानुपयोगित्वादिति । अवर्ष्यत्वं च वर्ष्यभिन्नत्वे सति तत्समानत्वं, तच्च भूयः प्रक्षरणाद्बोध्यम् ।

सायणीये तु वर्ष्यैनैरपेक्ष्येण भूमाववस्थिता अवर्ष्या इति व्याख्यातम्, तन्नास्माकं रोचते । पर्युदासस्य सदृग्ग्राहित्वेन भूमाववस्थिते तत्सदृशत्वाभावात् । अतस्तदर्थं तत्र स्वेदजलमेव ग्राह्यं, भूयः सादृश्यादिति ॥ ८ ॥

अत.परं 'ह्रादुनीभ्यः स्वाहे'ति श्रुतिमनुसृत्य कीर्तयितृनिष्ठमुत्कृष्टं त्रयोदशं भावमाहुः अलौकिकेनेत्यादि ।

**अलौकिकेन ज्ञानेन ये तु प्रोक्ता हरेर्गुणाः ।**

**कादाचित्काः शब्दगम्याः पतच्छब्दाः प्रकीर्तिताः ॥ ९ ॥**

तुः पूर्वोक्तरसादस्यभेदकः । अलौकिकं भगवत्कृपाजन्यं महदनुग्रहजन्यं वा अलौकिकार्थप्रकाशकत्वाल्लोकविलक्षणं यत् ज्ञानं, तेन प्रत्यासत्तिभूतेन मनसि तेषां भानादेनैव श्रोतुरधिकारस्यापि भानात् प्रकर्षेण तदधिकारानुसारेणोक्ताः कादाचित्काः श्रोतॄणां कस्मिंश्चित्कालविशेष एव बुद्धिगोचराः शब्दगम्या आप्तवाक्यादेव ज्ञायमाना ईदृशा ये हरेः सर्वदुःखहर्तुर्गुणाः रूपलीलाविशेषाः प्रकर्षेण कीर्तिताः । 'पत्लृ गतौ,' पतन् सर्वतो गच्छन् शब्दो ह्रादो यासामपां ताः पतच्छब्दास्तादृशाः प्रकर्षेण कीर्तिताः । तथा च भगवतो रहस्या ये गुणास्ते तादृशेभ्य एव कीर्तयितृभ्यः श्रोतृभिः प्राप्यन्ते, न सर्वैः । अतस्तादृशाधिकारसम्पत्तौ तादृशां कीर्तयितॄणां सङ्गः सर्वथा कार्य एवेति भावः ॥ ९ ॥

अत· परं 'पृ[illegible]भ्यः स्वाहे'ति श्रुतिमनुसृत्य चतुर्दशं जघन्यं भावमाहुः देवेत्यादि ।

**देवाद्युपासनोद्भूताः पृष्वा भूमेरिवोद्गताः ।**

देवे.: श्रीताः [illegible] शिव[illegible]गणपतिप्रभृतय आदिशब्देनान्ये पितृमात्रादयस्तेषामुपासनं [illegible]चिन्तनं सेवनं वा तेनोद्भूताः उपासके उद्गताः स्वयमन्यैश्चानुभूयमाना इति यावत् । ईदृशा ये गुणाः ज्ञानबलसामर्थ्यादयस्ते पृष्वाः अवश्यायजन्या । आपः पृष्वा इति सायणभाष्ये व्याख्यातं, तत्तुल्याः । ता यथा पाषाणभूमौ पतिताः, तत उद्गता इव भासन्ते, न [illegible] तास्तदीयाः, एवं तेऽपि गुणा भगवदीया एव, 'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा, तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भव'मिति गीतावाक्योक्त-

न्यायात् । परन्तु तानुपासकाः स्वीयत्वेन देवीयत्वादिना वा भ्रमान्मन्यन्ते, तेन च उरसिच्यन्ते साहंकारा भवन्तीति यावत् । अतस्तेषां स्वरूपं फलं च जघन्यमेव । नीहारेण प्रावृता इति श्रुतौ नीहारस्य ज्ञानतिरोधायकत्वेनोक्तत्वादिति तेपूत्कर्षबुद्धिस्ताद्दशां सङ्गश्च न कार्य इत्यर्थः ।

अतःपरं 'स्यन्दमानाभ्यः स्वाहे'ति श्रुतिमनुसृत्य पञ्चदशं भावमाहुः **साधनेत्यादि** ।

**साधनादिप्रकारेण नवधा भक्तिमार्गतः ॥ १० ॥**

**प्रेमपूर्त्या स्फुरद्धर्माः स्यन्दमानाः प्रकीर्तिताः ।**

**साधनानि** वर्णाश्रमधर्मास्ते आद्यो यस्य ताद्दशो यः प्रकारो मर्यादामार्गीयो निष्कामतत्करणरूपस्तेन **प्रकारेण यो नवधा भक्तिमार्गः** । 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनं । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् । इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणे'ति वाक्योक्तो मार्गो भगवत्प्राप्त्युपायः । ततो या प्रेम्णः भगवद्भक्तिरूपस्य पूर्तिर्हृदये व्याप्तिस्तया कृत्वा स्फुरन्तो भगवद्धर्मा येषु ते स्यन्दमानाः प्रकीर्तिताः । स्यन्द् प्रस्रवणे, प्रस्रवणरूपा या आपस्ताद्दशाः । ता यथा स्नानपानाचमनादौ प्रशस्ताः स्वसंयुक्तां भूमिं शीतलां कुर्वन्ति, मर्यानुपकुर्वन्ति च, तथा ताद्दशगुणाधाराः पुरुषा अपि पूर्वोक्तप्रकारेण सर्वान् श्रोतॄन् द्रष्टृंश्च स्वात्मनश्च भगवदुपयोगिनः कुर्वन्तीति ताद्दशां सङ्गः कार्य इत्यर्थः ॥ १० ॥

अतःपरं 'स्थावराभ्यः स्वाहे'ति श्रुतिमनुसृत्य षोडशं भावमाहुः **याद्दशा** इत्यादि ।

**याद्दशास्ताद्दशाः प्रोक्ता वृद्धिक्षयविवर्जिताः ॥ ११ ॥**

**स्थावरास्ते मया ख्याता मर्यादैकप्रतिष्ठिताः ।**

याद्दशाः साधनादीत्यारभ्य धर्मा इत्यन्तेन यत्प्रकारकाः सिद्धास्ताद्दशास्तत्प्रकारकाः सन्तः प्रोक्ताः प्रकर्षेण शास्त्रे उक्ताः, ये गुणाधारा वृद्धिक्षयविवर्जिताः न वर्धन्ते, न वा क्षीयन्ते, किन्त्वेकरूपास्तिष्ठन्ति । किञ्च, मर्यादैकप्रतिष्ठिताः । 'एके मुख्यान्यकेवलाः' मर्यादायामेव एके च ते प्रतिष्ठिताश्च एकप्रतिष्ठिताः मुख्याः प्रतिष्ठां च प्राप्ताः ते गुणाधारा मया स्थावरा एकत्र प्रतिष्ठिता या आपस्ताः स्थावराः तत्तुल्याः ख्याताः प्रकथिताः । ता यथा एकत्रैव तिष्ठन्ति स्वाधारमेव च शीतलीकुर्वन्ति, गुणवत्तया ख्यापयन्ति च । नतु स्वत उधम्यान्यानुपकुर्वन्ति, तथा ते गुणाधाराः पुरुषा अपि स्वसम्बद्धान् स्वाधारं च ख्यापयन्ति । तेन ताद्दशां सङ्गस्तावन्मात्रगुणकः, न तु विशेषानुग्रहफलक इत्यर्थः । अत्र मयेत्युक्त्या नान्येषां सम्मतिरिति बोधितम् । अन्येषां मर्यादाप्रतिष्ठितत्वेन पुष्टिस्वरूपस्याज्ञानान्मार्यादिकैपूत्कृष्टबुद्धेरिति ॥ ११३ ॥

अतःपरं 'नादेयीभ्यः स्वाहे'ति श्रुतिमनुसृत्य सप्तदशं भावं सार्धेनाहुः **अनेके**त्यादि ।

**अनेकजन्मसंसिद्धा जन्मप्रभृति सर्वदा ॥ १२ ॥**

**सङ्गादिगुणदोषाभ्यां वृद्धिक्षययुता भुवि ।**

**निरन्तरोद्गमयुता नद्यस्ते परिकीर्तिताः ॥ १३ ॥**

अनेकेषु जन्मसु संसिद्धाः सम्यक्सिद्धाः पूर्वोक्तरूपतया सिद्धाः । जन्मप्रभृतीति क्रियाविशेषणम् । एतज्जन्मारभ्य, सर्वदा सर्वस्मिन्काले सङ्गजातगुणदोषाभ्यां, आदिशब्देन कालकर्मदेशस्वभावास्तत्कृतौ यौ गुणदोषौ ताभ्यां कृत्वा भुवि भवनं भूः उत्पत्तिर्विधमानता वा तस्यां वृद्धिक्षययुताः सत्सङ्गेन समीचीनदेशकालकर्मस्वभावैर्वृद्धिमन्तः दुःसंगादसमीचीनकालकर्मदेशस्वभावैः क्षयं प्राप्नुवन्तः, ईदृशाः सन्तोपि निरन्तरोद्गमयुता निरन्तरो यदुद्गमः प्रवाहस्तेन युतास्तादृशा ये गुणास्ते नादेयीनामपामाधारभूता या नद्यस्तत्तुल्याः कीर्तिताः । तथा च नद्यो यथा काश्चित्स्वभावतः शुभाः काश्चिद्दुष्टाः, यथा गङ्गादयः, कर्मनाशादयश्च, काश्चन कालतः, यथा 'कलौ वेत्रवती गङ्गे'ति । गङ्गा च न पूर्ववत्स्नानमात्रेण कुष्ठं हरतीति, तथा देशतः, यथा भागीरथी महानदी च प्रवाहदेशभेदात् । एवं संगादपि ज्ञेयाः, यथा श्रीयमुनासङ्गेन गंगा उत्कृष्टा जाता, तासां जलं च तादृशमेव, तथा तद्भावा अपीति तन्निष्ठा गुणा अपि तत्स्वरूपा इति तादृशां संगो न निश्चयेनोत्तमफलद इत्यर्थः । अत्र च नदीनामेतावद्विशेषणकथनं दार्ष्टान्तिके एतेषामेव धर्माणां प्राप्त्यर्थम् । तेन भावेषु गुणेषु तदाधारेषु चैत एव धर्मा अतिदेष्टव्याः, नेतर इति सूचितम् । अन्यथैतावत्कथनवैयर्थ्यापत्तेरिति ॥ १२ ॥ १३ ॥

अतःपरं 'सैन्धवीभ्यः स्वाहे'ति श्रुतिमनुसृत्याष्टादशं भावमाहुः एतादृशा इत्यादि ।

**एतादृशाः स्वतन्त्राश्चेत् सिन्धवः परिकीर्तिताः ।**

अत्रैतादृशा इत्यनेनाद्यन्तविशेषणयोः संग्रहः । स्वतन्त्रा इत्यनेन मध्यविशेषणनिरासः क्रियते । तथा चैतादृशा अनेकजन्मसंसिद्धा निरन्तरोद्गमयुताः स्वतन्त्राः जन्मप्रभृति सर्वदा संगगुणदोषाभ्यां वृद्धिक्षयरहिताश्चेत्स्युः तदा ते जीवाः सिन्धवः समुद्रगामिन्यो महानद्यो महानदाश्च तत्तुल्याः परिकीर्तिताः । तेषां भावो महानदीजलतुल्यः । तद्यथा दृष्टं स्पृष्टं समीचीनव्यवहारेण शुभफलं गृहादावानीतमपि शुभम्, तथा तद्गता गुणा अपि स्वरूपतः फलतश्चोत्तमा इति तादृशां संगः कर्तव्य इति भावः ॥ १३½ ॥

अतःपरं 'समुद्रियाभ्यः स्वाहे'ति श्रुतिमनुसृत्य तत उत्तममूनविंशं भावमाहुः पूर्णा इत्यादि ।

**पूर्णा भगवदीया ये शेषव्यासाग्निमारुताः ॥ १४ ॥**
**जडनारदमैत्राद्यास्ते समुद्राः प्रकीर्तिताः ।**

पूर्णाः ज्ञानक्रियाभक्तिसाफल्ययुक्ताः भगवदीया भगवत्सम्बन्धिनः । भगवदीयशब्दो अव्युत्पन्नो वैडूर्यादिशब्दवद्रूढो 'भगवदीयत्वेनैव परिसमाप्तसर्वार्था' इति श्रीभागवतपञ्चमस्कन्धे प्रयोगादवगन्तव्यः । य इति दुर्लभत्वं तेषां सूच्यते । तान् गणयन्ति शेषेत्यादि । शेषः संकर्षणः सनत्कुमारोपदेष्टा । व्यासो भगवान् बादरायणः, भगवतो ज्ञानावतारः, समाधौ भगवत्स्वरूपं लीलां चानुभूय श्रीभागवतमुक्तवान्, शुकं च पाठि-

धान्। अग्निरग्निपुराणवक्ता, मारुतो वायुपुराणवक्ता, जडो रहूगणोपदेष्टा, नारदः प्रसिद्ध एव, सनत्कुमारशिष्यः प्राचीनबर्हिर्गुरुः, मैत्रो मैत्रेयः विदुरोपदेष्टा, आदिपदेन शिवादिसङ्ग्रहः। ते समुद्राः प्रकीर्तितास्तेषां भावः समुद्रजलतुल्यः। समुद्रजलं यथातिगम्भीरं अक्षोभ्यं रत्नानामाकरभूतं तथा तेषां भावोप्यत्यन्तगम्भीरोऽक्षोभ्यो नानाविधभावाकरश्चेति तन्निष्ठा गुणा अपि तथेति तादृशां संगः सेवा च स्वरूपतः फलतश्चोत्तमेति सा कार्येत्यर्थः ॥१४½॥

पूर्वं भावनिरूपणारम्भे श्रुतिपुराणसिद्धाः गन्धर्वाः 'कृष्णमेदास्ति'त्यर्थेन यथा नानाभेदा उक्तास्तथा अन्ते पुराणादिप्रसिद्धान् भगवदीयानपि नानाभेदान् द्वाभ्यामाहुः लोकेत्यादि।

**लोकवेदगुणैर्मिश्रभावेनैके हरेर्गुणान् ॥ १५ ॥**
**वर्णयन्ति समुद्रास्ते क्षाराद्याः षट् प्रकीर्तिताः।**
**गुणातीततया शुद्धान्सच्चिदानन्दरूपिणः ॥ १६ ॥**
**सर्वानेव गुणान्विष्णोर्वर्णयन्ति विचक्षणाः।**
**तेऽमृतोदाः समाख्यातास्तद्वाक्पानं सुदुर्लभम् ॥ १७ ॥**

लोकश्च वेदश्च गुणाश्च लोकवेदगुणास्तैर्मिश्रभावेन मिलितत्वेन एके मुख्यभगवदीयाः हरेः सर्वदुःखहर्तुर्भगवतो गुणान् वर्णयन्ति। यथा वाल्मीकी रामायणे रामगुणान् लोकमिश्रानुक्तवान्। यथा चाध्यात्मरामायणे शिवो रामगुणान् वेदमिश्रान्। यथा विष्णुपुराणे पराशरः सत्त्वगुणमिश्रान्। यथा च मनुःस्मृत्यारम्भे रजोमिश्रान्। 'स्वयंभुवे नमस्कृत्य'-त्युक्त्वा पश्चादग्रे सृष्टिं वर्णयिष्यन् 'ब्रह्मा नारायणाख्यस्तु सुष्वाप सलिले तदे'त्युक्तवान्। यथा च वायुर्वायवीये शिवरूपमेव ब्रह्मत्वेनोक्तवान्। न च मनोर्भगवदीयत्वाभावः शंक्यः। तृतीयस्कन्धे तस्य तथात्वसाधनात्। न वा वायोः। हनुमदवतारे तस्य रामभक्तत्वेनैव सुप्रसिद्धत्वादिति। न च गुणमिश्रवर्णने गुणाभिमानिवर्णनमिति शंक्यम्। तत्र तद्वक्तेषु ब्रह्मविष्णुमहेश्वरेषु अभिमानित्वापादकस्य कालमयस्यानुक्तत्वात्। अतो गुणावतारा एव तथोच्यन्ते, न जीवाः। एवमत्र लोकवेदगुणमिश्रभावेन पञ्चैव सिध्यन्ति, न षट्, अतो लोकवेदगुणैरुपलक्षितान् मिश्रभावेनोपलक्षितान् हरेर्गुणान् वर्णयन्तीति व्याख्येयम्, तथा सति संकीर्णपुराणवक्तारः षष्ठा भविष्यन्तीति तैः संख्यापूर्तिः। एवञ्च तत्तद्भावस्तत्तज्जलतुल्योऽवगन्तव्यः। तज्जलं यथा क्षाराम्लमादनाव्यक्तमधुरस्नेहव्यक्तमधुरगुणकम्, तथा तेषां भावोपीति तन्निष्ठा गुणा अपि लोकादिप्रधानास्तदनुरूपफलदा इति तत्संगोपि तथेत्यर्थः। न च गुणाद्युपलक्षिता गुणा न मूलगुणा इति शंक्यम्। 'यदादित्यगतं तेज' इति न्यायेन तेषामपि भागवतत्वे बाधकाभावादापाततः प्रतीतेरप्रयोजकत्वाच, अत एव निबन्धे 'सर्वस्वरूपी कृष्णस्तु कर्ता तेषु तथोदित' इति स्थितमिति न काचिच्छङ्का। एवं षट् समुद्रतुल्यान् भगवदीयानुक्त्वा सर्वत उत्तमान् सप्तमानाहुः गुणातीततयेत्यादि। स्वस्य गुणातीततया शुद्धान् लोकवेदगुणामिश्रान् सच्चिदानन्दरूपिणः सच्चिदान-

न्दात्मकान्, विष्णोरित्यस्य वा विशेषणं, तथा च सच्चिदानन्दरूपिणो विष्णोः तादृशान् शुद्धान् सर्वान् गुणान् स्वयं गुणातीततया विचक्षणाः सर्वज्ञातारः सन्तो ये वर्णयन्ति, ते अमृतोदाः शुद्धोदसमुद्रतुल्याः सम्यक्प्रकारेण आख्याताः कथिताः । अतस्तादृशां भावो गुणातीत एवेति । तत्र भगवद्गुणा अपि स्वस्य यथावत्स्वरूपतया प्रकाशमाना भवन्तीति तेषां संगो दुर्लभ इति तद्वाक्यानां तेषां या वाचस्तासां स्वान्तःप्रवेशनं सुतरां दुर्लभमित्यर्थः । अत्र शुद्धोदा इत्यनुक्त्वा यदमृतोदा इत्युक्तं तेन श्वेतद्वीपादिपरिखाभूतावरण्याख्यौ 'अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके' इति श्रुत्युक्तौ 'अरनामामृतांभोधिण्यनामामृतसागर' इति वाराहपुराणोपबृंहितौ समुद्रावपि संगृहीतौ ज्ञेयौ । किञ्च, 'कूप्याम्य' इत्यादिश्रुतौ 'सर्वाम्यः स्वाहे'ति समासायुक्तम् । तत्र सर्वशब्दस्य पूर्वोक्तसंग्राहकत्वे अपां ऊनविंशति भेदा एव भवन्तीत्यभिप्रेत्य सर्वशब्दस्य समुद्रजल एव निवेशः कृतः । एतदभिप्रायेणैव 'नद्यः प्रसन्नसलिला' इत्यस्य सुबोधिन्या 'मापो बहुविधा एकोनविंशति भेदा' इत्युक्तम् । न च पूर्वं शेषादीन् सप्तोक्त्वा ततो लोकेत्यादि सार्धद्वयेन समुद्रविभागस्योक्तत्वाच्छेषादय एव सप्तात्र ग्राह्याः, नेतर इति शंक्यम् । तत्र यथायथं क्रमेण ग्रहणे शेषव्यासयोः क्षारदधिमण्डोदतुल्यत्वापत्त्या प्रतिलोमग्रहणे च मैत्रेयनारदयोस्तथात्वापत्त्या निकर्षापत्तेः । अतस्तत्रापशब्दोक्ता इतर एव किञ्चित्तद्धर्मसाम्येन षड् ग्राह्याः । तेन पूर्वोक्ताः सप्तामृतोदेष्वेव प्रविशन्तीति मम प्रतिभाति ॥ १५–१७ ॥

नन्वेवं सति तेषां तादृशां च दुर्मिलत्वात्तद्वाक्यानामिदानीन्तनानां कालादिदोषदुष्टानामलभ्यमेवेति वक्तव्यं, न तु सुदुर्लभमिति शङ्कायामाहुः तादृशानामित्यादि ।

**तादृशानां क्वचिद्वाक्यं दूतानामिव वर्णितम् ।**
**अजामिलाकर्णनवद्बिन्दुपानं प्रकीर्तितम् ॥ १८ ॥**

तादृशानामपि क्वचिद्भगवतोद्धार्यत्वेन विचारिते केनचिदपराधादिना भगवद्वियुक्ते पुरुषे भगवतस्तदुद्धारोद्दिधीर्षायां वाक्यं श्रुतिगोचरं भवतीति शेषः । तत्र प्रमाणमाहुः दूतानामिव वर्णितमिति । यथा षष्ठस्कन्धे भगवद्दूतानां वर्णितं वाक्यमजामिलस्य श्रुतिगोचरमभूत्तथेदानीमपि भगवदुद्दिधीर्षाविषयस्य भवतीति नालभ्यम्, किन्तु दुर्लभमेवेत्यर्थः । एवं तादृशां सङ्गं तद्वागन्तःप्रवेशं च साधयित्वा श्रोतृणामुद्दिधीर्षाविशेषनिपयरन्प्रकारज्ञापनाय पाने विशेषमाहुः अजामिलेत्यादि । अजामिलेन यथा यमदूतान् प्रत्युच्यमानं भगवद्दूतवाक्यमाकर्णितं, तथा चेदाकर्णयेत्तदाकर्णनं बिन्दुपानं प्रकीर्तितम् । जलबिन्दोर्यथा पानं न तृप्तिदं, किन्त्वीषत्सुखदं, तथा स्वोद्देशेनान्यान् प्रत्युच्यमानं तदुद्देशेन वा तान् प्रत्युच्यमानं स्वयमाकर्णयेत्तदा तद्बिन्दुपानतुल्यं स्वदोषज्ञानेन सांसारिकग्लानिजनकं पश्चाज्जन्मान्तरे भगवत्प्राप्तिफलकं चेत्यर्थः । यदा त्वेतदुद्देशेनैव

१ वाल्मीकिविश्वतारामन्वादयः ।

भगवद्गुणबोधकं वाक्यममृतोदतुल्यैरुच्यते, तदा लिहैव भगवत्प्राप्तिफलदमिति तत्स्वरूपमाहुः रागेत्यादि ।

**रागाज्ञानादिभावानां सर्वथा नाशनं यदा ।**
**तदा लेहनमित्युक्तं स्वानन्दोद्गमकारणम् ॥ १९ ॥**

रागश्च अज्ञानं च ते आदिर्येषां तादृशा ये भावाः कामक्रोधादिविकारभाजस्तेषां यदा नाशनं निवृत्तिरमृतोदानां वाक्येन भवतीति शेषः । तदा तद्वाक्यपानं तत्कालमेव स्वगुणं जनयलेहनमित्युक्तं, लिह आस्वादने, आस्वादनमित्युक्तम् । तत्र हेतुः । स्वानन्दोद्गमकारणमिति । स्वस्य भगवतो य आनन्दः स्वरूपात्मको लीलात्मको वा तस्य य उद्गम उच्चैः प्राकट्यं तस्य कारणं, तथा चैवं दोषनिवृत्तिपूर्वकपरमानन्दसाधकत्वात्तत्पानं लेहनरूपमित्यर्थः । एवमपां ऊनविंशतिभेदपक्षादरणेन सर्वे भावास्तद्वन्तो जीवास्तद्गता गुणाश्च प्रपञ्चेन निरूपिताः ।

अतः परं सायणीये 'सर्वाभ्यः स्वाहे'त्यस्य तद्व्यतिरिक्ता इत्यर्थ उक्त इति तमनुसृत्य पूर्वेभ्योतिरिक्तं विंशं भावमाहुः उद्धृतेत्यादि ।

**उद्धृतोदकवत्सर्वं पतितोदकवत्तथा ।**
**उक्तातिरिक्तवाक्यानि फलं चापि तथा ततः ॥ २० ॥**

सर्वे पूर्वोक्तातिरिक्ता ये गुणा भावास्तदाधाराश्च ते उद्धृतोदकवत् कूपतडागादिभ्यः पात्रेपूद्धृतं यदुदकं तद्वत्, उद्धृतं जलं यथा परिमितं यादृशभाण्डस्थं तदनुरोधेन शुद्ध्यशुद्धिमच्च भवति । क्वचित्किञ्चित्स्वाकारानुकार्यपि भवति । तथा ते उक्तातिरिक्ता भावा अपि परिमिता आधारानुसारेणाकारानुसारेण च शुद्ध्यशुद्ध्यादिभाजः । तथेति वैयधिकरण्यदृष्टान्तबोधकं, उक्तातिरिक्तानां भावाधिकरणानां वाक्यानि, पतितोदकवत् पात्रेभ्यः पतितं यदुदकं तद्वत् । पतितोदकं यत्र पतति तदार्द्रीकुर्वत् क्वचिद्गुणं क्वचिद्दोषं च विधत्ते । तथा तेषां वाक्यानि आधारमार्द्रीकुर्वन्ति, तदनुसारेणैव गुणदोषकराणि । चेत्यनादरे, आत्मनः फलमपि तथा, आत्मनो गुणाधारस्य फलमपि तथा भाववदेव । चकारपाठे तु च पुनरित्यर्थो वक्तव्यः ॥ २० ॥

एवं भगवद्गुणाधारभूतान् जीवानां भावान् तदधिकरणभूतान् जीवांश्च भगवद्गुणस्वरूपफलभेदार्थं निरूप्योपसंहरन्ति इतीत्यादि ।

**इति जीवेन्द्रियगता नानाभावं गता भुवि ।**
**रूपतः फलतश्चैव गुणा विष्णोर्निरूपिताः ॥ २१ ॥**

इति उक्तप्रकारेण भुवि भूलोके जीवेन्द्रियगताः, जीवाः शरीरविशिष्टाश्चेतनाः, इन्द्रियाणि मनोवाक्चक्षुःप्रभृतीनि, तद्गतास्तेषु स्थिताः नानाभावं गताः, तत्र स्थित्यैव

१ रागनिवृत्तिः प्राचीनबर्हिष- जाता । यथा चाज्ञाननिवृत्तिः रहूगणस्य जाता । यथा च आदिशब्देन द्वेषस्वनिवृत्तिः विदुरस्य जाता । एवमन्यत्र ।

रूपतः फलतश्च अनेकभावं प्राप्ताः, विष्णोर्व्यापकस्य भगवतो गुणा धर्माः निरूपिताः, नितरां कथिताः । तथा च भगवन्निष्ठत्वेनैकरूप्येप्याधारभेदेन तल्लिङ्गात्तदनुरूपफलाश्च भवन्तीति तदाधारस्वरूपं विचार्य तज्ज्ञानार्थं जीवसङ्गो भगवद्भक्तैर्विधेयो, नतु कथञ्चित् गुणसत्तामात्रेणेत्यर्थः । अत्रोपसंहारे गुणा निरूपिता इति कथनेन गुणनिरूपणमेव मुख्यम् । भावतदाधारनिरूपणं तु तद्रुपोद्घाततया प्रासङ्गिकमिति बोधितं ज्ञेयम् ॥ २१ ॥

**इति श्रीमद्वल्लभाचार्यचरणैकतानपीताम्बरात्मजपुरुषोत्तमविरचिता जलभेदविवृतिः सम्पूर्णा ॥**

---

श्रीकृष्णाय नमः ।

# जलभेदः ।

## श्रीवल्लभकृतविवृतिसमेतः ।

श्रीमदाचार्यचरणसरोजे शरणं सदा । तेनैव खलु तद्वाक्यभावार्थावगतिर्मम ॥ १ ॥
नानामार्गेषु विविधभावैस्ते तेऽधिकारिणः । प्रवृत्तास्तत्तदेवात्र मन्यन्ते भजनं हरेः ॥ २ ॥
अतस्तन्मार्गभावाधिकारिणां तत्स्वरूपतः । फलतश्च निजाचार्याः सन्देहविनिवृत्तये ॥ ३ ॥
वेदबोधितकूपादिजलदृष्टान्तभेदतः । विवेकं चक्रिरे तच्चद्भावार्थो हि प्रकाश्यते ॥ ४ ॥

तत्र प्रथमं 'निवृत्ततर्षैरुपगीयमाना'दित्यत्र भगवद्गुणानुवादे 'आत्मघाती कर्मजडो निन्दितार्थरतः सदा । पशुघ्नी च' एतद्व्यतिरिक्तानां सर्वेषां प्रवृत्तिरुक्ता । ते च मुक्तमुमुक्षुविषयिणः । तत्र मुक्तानां 'आत्मारामाश्च मुनय' इत्युक्तप्रकारेण प्रवृत्तिः । मुमुक्षूणां विहितभक्तिज्ञानयोगतपःकर्मादिसाधनप्रकारेण बहुधा सा भवति । विषयिणां तु तत्र रागादिभावधर्मतः प्रवृत्तिर्न तु धर्मतः । तथा च, 'वेदे रामायणे चैव भारते' इत्यत्र 'हरिः सर्वत्र गीयते' इत्युक्तत्वात् सर्वत्र सर्वेषु धर्मेषु भगवद्गुणप्रवेशस्यावश्यं वक्तव्यत्वात् तेषां सर्वेषां साधनफलयोरेकरूपत्वं वा नानात्वमिति सन्देहे तन्निर्णायकं ग्रन्थं निरूपयितुं श्रीमदाचार्यचरणाः प्रतिजानते—

> नमस्कृत्य हरिं वक्ष्ये तद्गुणानां विभेदकान् ।
> भावान्विंशतिधा भिन्नान्सर्वसन्देहवारकान् ॥ १ ॥

हरिं नमस्कृत्य भावान् वक्ष्ये । भावास्तु 'इति जीवेन्द्रियगता' इत्यत्रोपसंहारे जीवगता एवोक्ता इत्युपक्रमेपि त एव ज्ञेयाः । तैरेव भगवद्गुणानामनेकरूपत्वम्, अन्यथा भगवद्गुणाः सर्वे तत्तत्स्वरूपात्मका इत्येकरूपत्वमेव, गुणगुणिनोरभेदात् । आधारगुणसम्बन्धादेव तेषां भेद इति विशेषणमाहुः तद्गुणानां विभेदकानिति । भगवद्गुणानां

---

१ श्रीवल्लभदेव टीकेति विषये उपोद्घाते द्रष्टव्यं ।

स्वरूपतः पृथक्कारकान् भिन्नत्वेन ज्ञापकानित्यर्थः । अथवा स्वस्वभावानुसारेण फलसाधकान्, न तु तदनुसारेणेत्यर्थः । एतदेव भेदकत्वं मायानाम् । ते भेदाः कतीति प्रमाणमाहुः **विंशतिधा भिन्नानिति** । तत्रापि द्वैविध्यम् । एके जीवाधिकारानुसारिणः । एके पुनः कृपया भगवद्दानजन्याः स्वरूपनिष्ठाः स्वतश्चास्ते भिन्नाः, ते एवाग्रे अमृतोदद्दष्टान्तेन वाच्याः । एते सर्वेपि भेदा वेदे कथिताः 'कूप्याभ्यः स्वाहा' इत्यादिना । एतद्विवेचने सर्वेषां स्वरूपज्ञानेन सर्वे सन्देहा निवर्तन्त इत्याहुः **सर्वसन्देहवारकानिति** । एतदर्थमेव वेदेप्युक्ताः ॥ १ ॥

ननु कूपादिदृष्टान्तेन भेदज्ञानं कथं भविष्यति तत्राहुः—

**गुणभेदास्तु तावन्तो यावन्तो हि जले मताः ।**
**गायकाः कूपसंकाशा गन्धर्वा इति विश्रुताः ॥ २ ॥**

नह्यत्र कूपादिदृष्टान्तः, किन्तु तत्तत्स्थितगुणदोषसहितजलदृष्टान्तोभिप्रेतः । तेन यावन्तो जले भेदास्तावन्तो भेदा गुणानामपि भवन्तीति भावः । तत्र प्रथमं प्रथमाधिकारित्वाद्विषयिणां भावमाहुः **गायका इति** । गायका भगवद्गुणगायकाः । ते तु गन्धर्वा विश्रुताः प्रसिद्धाः । तेषामयमेव सहजो धर्मः यत्सङ्गीतशास्त्रोक्तं भगवद्यशः प्रबन्धरागतानाधालापकुशला रागादिमाधुर्यविषयत्वेन गायन्ति, न तु भगवद्धर्मस्वरूपं ज्ञात्वा, परन्तु भृतकाध्यापनवन्न गायन्ति, तादृशास्ते कूपसङ्काशाः कूपतुल्याः प्रोक्ताः । सामान्यतः कूप उक्तो, न तु गुणदोषयुक्त इति । यथा कूपो महान् रमणीयः, जलमपि समीचीनमेव, परन्तु दूरे अधस्तलं, तेनेतरविषयप्रयत्नत्यागेन रज्ज्वादिसाधनपूर्वकं तदाहरणे तत्प्राप्तं भवेत्, तथा तेषां भगवद्यशोगानं तूत्तममेव, परन्तु तस्य परमफलमन्यविषयकप्रयत्नत्यागे तदेकनिष्ठगुणगानेन प्राप्तं भवेत्, नो चेद् दूर एवेति भावः सूचितः । वस्तुस्वभावात्तथा भवेदपीति सामान्यदृष्टान्त उक्तः ॥ २ ॥

एतादृशा गन्धर्वा अपि बहुविधा इति तद्भेदानाहुः—

**कूपभेदास्तु यावन्तस्तावन्तस्तेपि संमताः ।**
**कुल्याः पौराणिकाः प्रोक्ताः पारंपर्ययुता भुवि ॥ ३ ॥**

यथा कूपभेदा बहवस्तथा गायका अपि बहुविधा ज्ञेयाः । तानेवाग्रे 'वेश्यादिसहिता' इत्यनेन वक्ष्यन्ति । मध्ये पौराणिकान्निरूपयन्ति **कुल्या इति** । यद्यपि गायकप्रकरणमध्ये पौराणिकनिरूपणं न संभवति, तथापि यन्निरूपितं तत्तादृशपौराणिकानां गायकतुल्यत्वमेवेति ज्ञापनायोक्तम् । अत्रायं भावः । गानं द्विविधम् । एकं संगीतशास्त्रोक्तं रागतालमूर्च्छनादिभेदेन । अपरं वक्तृश्रोतृसद्भावे पुराणाकथनद्वारा गुणानुकीर्तनम् । उभयेपि तत्तदुपजीविनः, परन्तु भृतकाध्यापनवन्न गायन्तीति सामान्यदृष्टान्तेन ज्ञायते । वृत्त्युपजीविनामग्रे निन्दितत्वाच्च । एवं सति सामान्यत उभयेषां समानधर्मत्वाद्गायकानां

मध्ये सामान्यतः पौराणिकानपि निरूपयन्ति कुल्या इति । तेषां पुराणादिकथनं तु परंपराप्राप्तम्, न तु कश्चनोद्दिश्य ते कथयन्ति, तादृशास्ते कुल्या अल्पा कृत्रिमा सरित्प्रवहणशीलास्तत्तुल्या इत्यर्थः । यद्यपि ता अपि पारम्पर्ययुता, यत आनीयन्ते तत्रागाधता, तथापि स्वयं स्वल्पा कृत्रिमा, न तु सहजा । तेनोपरोधे रुद्धा अपि भवन्तीति सूचितम् । तथा तेऽपि यतः पुराणार्थावगतः स गुरुर्महान्, परन्तु स्वयं स्वल्पपात्ररूपाः । साहजिकभगवद्धर्मप्रवृत्तिरहिताः । संसारस्थिताः । उपरोधे रुद्धा अपि भवन्ति तादृशाः । परन्तु प्रवहणशीलत्वात् कुल्यानां तद्दृष्टान्तेन पुराणकथनद्वारा यथाधिकारं धर्मोपदेशका इति गायकसकाशादेतावान् विशेषः । अत एव द्वितीयभावत्वेन निरूपणम् ॥ ३ ॥

तादृशा अपि केवलं वृत्त्यर्थमेव पुराणपाठकाः, तदा ततोऽपि हीनत्वमाहुः —

**क्षेत्रप्रविष्टास्ते चापि संसारोत्पत्तिहेतवः ।**

ते च पुनः क्षेत्रप्रविष्टाः 'क्षेत्रं पत्नीशरीरयो'रिति स्त्रीपुत्रादिभरणपोषणार्थं पुराणादिपाठे प्रविष्टास्तदा संसारोत्पत्तिहेतवो भवन्ति । यथा कुल्यासम्बन्धिन्य आपः क्षेत्रेषु प्रविष्टा यदा तदा संसारोत्पत्तिहेतवो रजोगुणयुक्तत्वेन रते पोषकवस्तूत्पादकत्वादविद्याधर्माणामेवोत्पादिका भवन्ति, न तु प्रवहणदशावच्छोधकत्वमुपकारकत्वं वा तेषां, तथा तेऽपि सांसारिकस्त्रीपुत्रादिभरणपोषणमात्रोपयोगित्वेन पुनः पुनर्जन्ममरणादियुक्ता एव भवन्ति, न परोपकारकाः स्वात्मशोधका वा भवन्ति । तादृशश्रवणपाठात् शक्तिहासे पुराणार्थाः फलदा न भवन्तीति भावः । एतेन तेषां तृतीयमार्गप्रवेशो निरूपितः ॥ ३½ ॥

एवं भेदद्वयमुक्त्वात्र परं गायकभेदानाहुः —

**वेश्यादिसहिता मत्ता गायका गर्तसंज्ञिताः ॥ ४ ॥**

पूर्वोक्ता गायका भृतकधर्मरहिताः । तेषामन्यधर्माधिकाराभावात् गाने भृतकधर्मराहित्यमात्रमेवोत्तमत्वम् । तादृशाः पुनर्वेश्यादिसहिताः, आदिपदेनान्येऽपि विधर्माः पानादयः सूचिताः । अत एव मत्ताः, स्वपरधर्मविवेकरहिताश्चेत्तदा गर्ततुल्याः । गर्तोऽत्र जलरहितान्धकूपः । स यथाधस्तलपर्यन्तगतः दुष्टजीवकङ्कालादिस्थानभूतोऽन्येषां पतनहेतुश्च भवति, तथैतेऽपि स्वयं स्वभोगताः एवान्येषामपि पातहेतवो भवन्तीति भावः ॥ ४ ॥

एवं चतुर्थं भावमुक्त्वा पञ्चमं भावमाहुः —

**जलार्थमेव गर्तास्तु नीचा गानोपजीविनः ।**

गर्ता अपि बहुविधा इति ये जलार्थं जलसङ्ग्रहार्थमेव क्रियन्ते, गानोपजीविनो भृतकाध्यापकवत् गन्धर्वास्तत्तुल्याः । यथा तज्जलस्य प्रयोजनमुपजीवनमेव, नान्यत्, कर्माद्युपयोगित्वाभावात्तीर्थरूपत्वाभावाच्च । तथा तेषामपि तेन गानेनोपजीवनमेव भवति, न तु कश्चन विशिष्टो धर्मो भवति, प्रत्युत पापमपि भवेन्निषिद्धत्वात्तस्येति भावः । एवं गन्धर्वाणां त्रयो भेदा उक्ताः ॥ ४½ ॥

एवं विपर्यिणां भावानुक्त्वा मुमुक्षूणां भावान्निरूपयन्तः पष्ठं भावमाहुः—

**ह्रदास्तु पण्डिताः प्रोक्ता भगवच्छास्त्रतत्पराः ॥ ५ ॥**

ह्रदास्त्विति । पूर्वे तु सन्मतिलाभावादपण्डिताः, एते तु पण्डिताः धर्माधर्मविवेकिनः कर्ममार्गीया यद्यपि गृहादिसंसक्तास्तथापि निवृत्तिमुखाः । अत एव मोक्षेच्छया भगवच्छास्त्रे तत्परा जाताः । तादृशास्ते ह्रदा ह्रदतुल्या इत्यर्थः । अत्रापि सामान्यतो ह्रद उक्तो, न तु कश्चन विशेषः । तेन ह्रदो यथा प्रवाहधर्मरहितो निर्मलः, तथा तेपि प्रवाहधर्मान्निवृत्ता निर्मलप्रज्ञा इति सूचितम् । तत्परत्वकथनेन तद्धर्मजिज्ञासैवास्ति, न तु निःसन्दिग्धं धर्मा ज्ञाता इति ज्ञाप्यते । एतेन तेषां प्रथमप्रवृत्तिः सूचिता ॥ ५ ॥

ततोऽग्रेतनभावविशिष्टं स्वरूपं निरूपयन्तः सप्तमं भावमाहुः—

**सन्देहवारकास्तत्र सूदा गम्भीरमानसाः ।**
**सरःकमलसंपूर्णाः प्रेमयुक्तास्तथा बुधाः ॥ ६ ॥**

तत्र भगवच्छास्त्रेषु ये सन्देहवारकाः, बहूनां मतानां कथनात्तेषु सन्देहा उत्पद्यन्ते, तेषां ये निवारकास्ते सूदाः । सुष्ठु शोभनमुदकं येषां तादृशा ह्रदास्तद्रूपाः । शोभनत्वकथनेन गुणविशेष उक्तः । किञ्च, गम्भीरमानसा इति गंभीरं मानसं येषां, भगवद्धर्मज्ञानेनान्यथाभावनाविपरीतभावनादिना कलुषितं न भवतीति भावः । पूर्वेषु गंभीरत्वसूदत्वादिगुणाभावात्सामान्यत्वमुक्तम् । तत्र विशिष्टधर्मत्वात्ततो विशेष उक्तः, तथा दार्ष्टान्तिकेपि सन्देहवारकत्वविशेषः । परन्तु ज्ञानस्यैव विशेषो न क्रियाया इति दृष्टान्तेन सूचितं भवति । अतः परं पूर्वतो विशिष्टमष्टमं भावमाहुः **सरःकमलसंपूर्णा** इति । पूर्वं तु शास्त्रज्ञानेन पूर्णा उक्ताः, गंभीरमानसत्वकथनेन ज्ञानस्थैर्यमप्युक्तम् । एते तु बुधाः ज्ञानिनः पुनः प्रेमयुक्ता भक्तियुक्ता इति सरःसंबन्धिन्यः कमलैश्च संपूर्णाः आच्छादिताः तादृश्य आपस्तद्रूपाः । सरस्तु विहितं भवति । तत्र कमलं भक्तिरूपं, तेन पूर्णा आपः रसरूपाः । तत्तुल्यत्वकथनेन विहितभक्तिसहितप्रेमयुक्ताः ज्ञानेन च वासितास्तादृशास्त इति सूचितम् । तेनात्र क्रियापि सूचिता । रसस्य विहितसरःसंबन्धित्वेन विहितभक्त्यनुसार्येव प्रेमापि तेष्विति सूचितम् । एवमेते त्रयोपि क्रमत उत्तरोत्तरविशिष्टधर्मसहिताः सामान्यतो विहितभक्तिमार्गीया उक्ताः ॥ ६ ॥

अतः परमेतेष्वप्यवान्तरभेदान्निरूपयन्तो नवमं भावमाहुः—

**अल्पश्रुताः प्रेमयुक्ता वेशन्ताः परिकीर्तिताः ।**
**कर्मशुद्धाः पल्वलानि तथाल्पश्रुतभक्तयः ॥ ७ ॥**

पूर्वोक्तेषु सरोदृष्टान्तीयेषु केचनाल्पं श्रुतमध्ययनं येषामेतादृशाः, परन्तु भगवद्गुणेषु प्रेमयुक्ताः, ते वेशन्ताः अल्पसरोरूपाः परिकीर्तिताः । प्रेमयुक्तत्वेपि विहितत्वेन प्रवृत्तत्वात् संपूर्णभगवद्धर्मज्ञानं विना भक्तिर्दृढा न भवतीत्यल्पसरोदृष्टान्त उक्तः । यथाल्पसरो

नष्टमपि भवेत्तथैतेषां भावा अपीति भावः। एतेन पूर्वापेक्षया हीनभावत्वमुक्तम्। एतदेवोक्तं तत्त्वार्थदीपे 'शास्त्रज्ञानाभावेपि प्रेम्णा भजते स मध्यम' इति। एवं सर्वमित्यत्र। अतोपि हीनत्वेन दशमं भावमाहुः कर्मशुद्धा इति। कर्मणैव शुद्धाः निःकामकर्मादिना चित्तशुद्धियुक्ताः, नतूत्पन्नज्ञानभक्त्यादयः, ते तु पल्वलतुल्याः। यद्यपि वेशन्तपल्वलयोर्न भेदस्तथापि वेदे यथेन्द्रमहेन्द्रयोर्भेदः स्वीकृतस्तथा वेशन्तपल्वलयोरपि 'वेशन्तीभ्यः स्वाहा पल्वल्याभ्यः स्वाहे'त्यत्र भेदनिर्देशः कृत इति तथात्वेन दृष्टान्तः। परं तत्रैतावान् विशेषः। पल्वलमपि द्विविधम्। एकं कमलादिरहितम्, अपरं तत्सहितम्। पूर्वोक्तेषु भक्तित्वा(सत्त्वा)त् कमलसहितवेशन्तदृष्टान्त उक्तः, कर्मशुद्धेषु विहितैकनिष्ठेषु तद्रहितदृष्टान्त इति, यथा पल्वलं स्वल्पं सर्वदा स्थिरजलं न तिष्ठति, वर्षाकाले पुनः पूर्णं भवति, तदपि स्वरूपतः स्वल्पं, तथा कर्मपूर्तौ पूर्णता, तस्य क्षये शुष्कतेति जन्ममरणादिसहिता निरूपिताः। पूर्वोक्तेषु कमलादिसहितवेशन्तदृष्टान्तेन भक्तिमत्त्वेन जन्ममरणाद्यभावोपि संभवति। यथा कमलादिसंपत्तिशोभादर्शनादिना कदाचित्तस्य महत्त्वं रक्षां च कश्चित्कारयति तथेत्यर्थः। एतेषु तदभावान्न तथेति भावः। कदाचिज्जन्मान्तरे तादृशो ज्ञानी भवतीति निबन्धे निरूपितम्। किञ्च, यथा एतादृशाः पल्वलरूपाः प्रोक्तास्तथा वेशन्तदृष्टान्तीयानां पूर्वमल्पश्रुतत्वं प्रेमयुक्तत्वं च निरूपितम्। ते पुनरल्पश्रुतभक्तयो भवन्ति, तदा पल्वलतुल्या एवेति भावः। श्रुतं [illegible] पूर्वमप्यल्पमेव केवलं प्रेमयुक्तत्वेन कमलसहितवेशन्तदृष्टान्त उक्तः। तदभावात्पल्वलतुल्यत्वं युक्तमेव ॥ ७ ॥

एवं कर्ममार्गीयानां स्वरूपमुक्त्वा योगादिभावानां स्वरूपं निरूपयन्तः एकादशं भावमाहुः।

**योगध्यानादिसंयुक्ता गुणा वर्ष्याः प्रकीर्तिताः।**
**तपोज्ञानादिभावेन स्वेदजास्तु प्रकीर्तिताः ॥ ८ ॥**

योगोऽष्टाङ्गः। तत्र ध्यानादिः कल्पितमूर्तेस्तेन संयुक्ता ये गुणास्ते वर्ष्याः वर्षासम्भिजलतुल्या इत्यर्थः। वर्षा यथा शून्यावलम्बिन्यः, न स्वरूपावलम्बिन्यस्तत्रापि फलस्याल्पत्वात् ता अपि प्रथमोद्गता विरलाः पतनमात्रेण शुष्का भवन्ति, न [illegible] कचिदार्द्रतां संपादयन्ति, तथा तादृशा अपि न भक्तिफलाधिकारिणः। किन्तु तत्साधनानुसारिफलाधिकारिण इति भावः। अतः परं द्वादशं भावमाहुः तपोज्ञानादीति। केचन तप एव परं मत्वा कुर्वन्ति, केचन ज्ञानमेव केवलं परं मन्यन्त इति तेषां स्वरूपमाहुः—तपः पञ्चाग्निसाधनादीनि, ज्ञानं केवलं, तत्र प्रवृत्तानां भावाः स्वेदजाः स्वेदजलतुल्याः कथिता इत्यर्थः। यथा श्रमेण स्वेदजलं स्रवति। ऊष्मणा वा। अपवित्रमप्रयोजनकं च भवति, तथैवैते भावाः श्रमसाधकाः, न तूत्कृष्टफलदाः। अग्रेपि तापकारकाः संसारकरणादिति भावः। अत एव 'रहूगणैतत्तपसा न याति न चेज्यया निर्वपणाद्गृहाद्वा। न च्छन्दसा नैव जलाग्निसूर्यैर्विना महत्पादरजोभिषेक'मित्युक्तम् ॥ ८ ॥

अन्ये केचन वेदमाहात्म्यज्ञानैकनिष्ठास्तेषां स्वरूपं कथयन्तस्त्रयोदशं भावमाहुः—

**अलौकिकेन ज्ञानेन ये तु प्रोक्ता हरेर्गुणाः ।**
**कादाचित्काः शब्दगम्याः पतच्छब्दाः प्रकीर्तिताः ॥ ९ ॥**

अलौकिकेन ज्ञानेन वेदोक्तार्थज्ञानेनेत्यर्थः । ब्राह्मणानां वेद एव परस्तदभ्यास एव तेषां धर्म इति तत्पाठकरणरूपा ये गुणाः प्रोक्ताः, तेपि कादाचित्काः, न सर्वदा स्थिराः, तेपि शब्देनैव गम्याः, शब्द एव गम्यो येषां, नत्वर्थ इति वा, तादृशास्ते पतन्तः उच्चतः पतन्तो ये जलौघास्तेषां शब्दा इव । अथवा दूरात् कर्णे पतन्तः शब्दा इव प्रकीर्तिताः । यथा ते निरर्थकाः, दूरात् पतनजशब्देनैव ज्ञायन्ते, न तु ते प्राप्तुं शक्यन्ते, तथा वेदपाठका एव, न तु ते वेदार्थं जानन्ति, न मुख्यफलं प्राप्नुवन्तीति भावः । आपाततो ज्ञानेपि कादाचित्कत्वेन न मुख्यफलमिति भावः ॥ ९ ॥

ननु तेपि देवाद्युपासनां कुर्वन्ति, वेदार्थाज्ञाने तु साङ्गोपासना न भवेदित्याशङ्कानिरासाय चतुर्दशं भावमाहुः ।

**देवाद्युपासनोद्भूताः पृष्वा भूमेरिवोद्गताः ।**
**साधनादिप्रकारेण नवधा भक्तिमार्गतः ॥ १० ॥**
**प्रेमपूर्त्या स्फुरद्धर्माः स्यन्दमानाः प्रकीर्तिताः ।**

यद्यपि केचन देवादीनामुपासनां कुर्वन्ति । न ह्येतावानेव वेदार्थ इति तावन्मात्रज्ञानेन क्रियमाणा सा न परमफलदायिनीति तादृशा गुणा भावाः भूमेरुद्गताः पृष्वा जलबिन्दवो बुद्बुदास्तद्रूपाः । यथा ते यत्रैवोत्पन्नास्तत्रैव लीना भवन्ति, तथा यस्य देवस्योपासना तत्रैव पर्यवसन्ति, न तु ब्रह्मपर्यवसाना इत्यर्थः । अतः परं वैष्णवधर्मनिष्ठस्य भावान्निरूपयितुं पञ्चदशं भावमाहुः साधनादीति । देशादिसाधनेषु भूतशुद्ध्यादिप्रकारेण नवधा भक्तिमार्गतः श्रवणकीर्तनादिद्वारा प्रेमपूर्त्या स्फुरन्तो धर्माः अश्रुपुलकादिरूपा येषां तादृशाः स्यन्दमाना भूमितः प्रस्रवणशीला आपस्तद्रूपाः । पूर्वापेक्षया प्रस्रवणशीलत्वात् किञ्चिदुपकारकत्वं सूच्यते । तेनोपासनायामपि तान्त्रिकरीत्या विष्णूपासना ज्ञेया । परन्तु वृद्धिक्षयसहिताः, श्रवणस्याल्पत्वाद्विस्मृतिपर्यवसानत्वाच्च ततोप्यागमनगमनादिकं संभवतीति सूचितम् । एतेन सकामतापि सूचिता ॥ १०½ ॥

एते तु वृद्धिक्षयसहिताः, ते एव पुनर्वृद्धिक्षयरहिता भवन्ति, तेषां भावमाहुः षोडशम् ।

**यादृशास्तादृशाः प्रोक्ता वृद्धिक्षयविवर्जिताः ॥ ११ ॥**
**स्थावरास्ते समाख्याता मर्यादैकप्रतिष्ठिताः ।**

यादृशाः पूर्वं प्रोक्तास्तादृशा वृद्धिक्षयविवर्जिताश्चेत्तदा स्थावराः स्थिरजलतुल्याः स्थिरजलाशयाः स्थिरप्रवाहा नदीरूपा वा, तत्सदृशाः । स्थिर स्वरूपमाहुः मर्यादैकप्रतिष्ठिता इति । यावत्प्रमाणमर्यादया विहितास्तावन्मर्यादया सर्वदा स्थिराः ।

अत एव तावति धर्मे वृद्धिक्षयरहितत्वमुक्तम् । तेन निरन्तरपूजाप्रवाहसहिताः स्वमर्यादाधर्मयुक्तास्तादृशा भक्ताः जन्ममरणादिरहिता मोक्षपर्यवसायिनः स्वमर्यादयेति ज्ञापितम् । यथा तादृश्यो नद्योपि परंपरया नद्यन्तरसङ्गेन समुद्रगामिन्यस्तथेति भावः । जलाशयपक्षे वृद्धिक्षयराहित्यमेव जन्ममरणाभाव इति तथात्वम् ॥ ११½ ॥

अथ भक्तिमार्गीयभेदान् वक्तुं सप्तदशं भावमाहुः ।

**अनेकजन्मसंसिद्धा जन्मप्रभृति सर्वदा ॥ १२ ॥**
**सङ्गादिगुणदोषाभ्यां वृद्धिक्षययुता भुवि ।**
**निरन्तरोद्गमयुता नद्यस्ते परिकीर्तिताः ॥ १३ ॥**

प्रथमजन्मारभ्यानेकजन्मसाधनैः सम्यक् सिद्धिं प्राप्ताः । **सर्वदेति** साधननैरन्तर्यमुक्तम् । तेन 'जन्मान्तरसहस्रेषु तपोध्यानसमाधिभि'रित्युक्तसाधनसिद्धाः प्रावाहिकभक्तिमन्तो भक्ताः सामान्यतः प्रोक्ताः । ते प्रथमं साधनदशायां सङ्गादिगुणदोषाभ्यां वृद्धिक्षययुक्ता भवन्ति, परन्तु निरन्तरमुद्गम उदयस्तेन युता भगवद्धर्मप्रयत्नवन्तः सङ्गदोषेण क्षयेपि तद्धर्मनिष्ठां न त्यजन्ति । तादृशा नद्यः नदीरूपा नदीजलतुल्या इत्यर्थः । यथा नद्यः वर्षाजलेन वर्धन्ते, ग्रीष्मसङ्गेन क्षीणा भवन्ति, परन्तु मूलतः प्रवाहस्य निरन्तरमुद्गमस्तिष्ठति, तेन परंपरया समुद्रगामिन्यो भवन्ति, तथा तादृशभावा अपि सत्सङ्गेन वर्धन्ते, असत्सङ्गेन क्षीयन्ते, तथापि निरन्तरं भगवद्धर्मनिष्ठात्यागाभावात् कदाचिद्भगवत्समुद्रगामिनो भविष्यन्तीति भावः । पूर्वोक्तापेक्षया हीनाधिकार उक्तः ॥ १३ ॥

अतः परं च शिष्टान् निरूपयन्तोष्टादश भावमाहुः ।

**एतादृशाः स्वतन्त्राश्चेत्सिन्धवः परिकीर्तिताः ।**
**पूर्णा भगवदीया ये शेषव्यासाग्निमारुताः ॥ १४ ॥**
**जडनारदमैत्राद्यास्ते समुद्राः प्रकीर्तिताः ।**

एतादृशा पूर्वोक्तधर्मवन्तः प्रवाहमार्गीयाः स्वतन्त्राश्चेत् न केनचिद्वृद्धिं क्षयं वा प्राप्नुवन्ति, ते समुद्रपर्यन्त समुद्रगप्रवहणशीलाः सिन्धवः महानद्यो नदा वा तद्रूपा ज्ञेयाः । यथा तादृश्यो नद्यः स्वयमप्रतिबद्धाः सत्यः समुद्रं प्रविशन्ति, तथा तादृशा भक्ता अपि स्वमार्गानुसारेण भगवन्तं प्राप्स्यन्तीति भावः । अतः परं केवलं भगवद्धर्मैकपूर्णान् निरूपयन्त एकोनविंशं भावमाहुः पूर्णा इति । एते सर्वे भगवदीयाः भगवद्धर्मैकनिष्ठाः ज्ञातारो वक्तारश्च सर्वदा तदेकरसपूर्णाः, न तु कदाचिदपि न्यूनभावयुताः शेषादयः । तत्र शेषो गुणगानपरः सर्वदा भगवद्धर्मवक्ता । व्यासः सकलपुराणकर्ता, तद्द्वारा समस्तधर्मवक्ता । अग्निः स्वयमेव । अयं भावः । श्रीमदाचार्यस्वरूपे अग्निद्वयमस्ति, मर्यादामार्गोपदेष्टृत्वं पुष्टिमार्गोपदेष्टृत्वं च । तेन स्वरूपमपि द्विविधम् । तत्र सति मर्यादामार्गीयान् प्रति तादृग्रूपेण प्राकट्यं भवति, न त्वलौकिकस्य यद्भाष्टकसर्वोत्तमाद्युक्तस्तेनेति तादृशस्य तन्म-

ध्यपातित्वेन गणना कृता, अत एव 'व्यासोस्माकं गुरु'रित्युक्तम् । अन्यथा पुष्टिमार्गगुरुवस्तु स्वामिन्य इति तद्भावात्मकभगवन्मुखारविन्दाधिष्ठात्रलौकिकाग्निरूपस्य स्वस्य व्यासगुरुत्वं न संभवतीति न तथोक्तं स्यात् । एवं सति शेषादिमध्यपातित्वेन भगवद्गुणनिरूपणसाम्याद्युक्तैव गणनेति सर्वमनवद्यम् । केचित्त्वग्निं रुद्रामिरिति वदन्ति । रुद्रस्य भक्तत्वात् । मारुतो हनूमान् परमभक्तः । जडो जडभरतः । नारदः पञ्चरात्रागमप्रवर्तकः । मैत्रो मैत्रेयो धर्मवक्ता । एते सर्वे मर्यादामार्गीया भक्ता गुणज्ञाः, न तु स्वरूपनिष्ठेकभावा इति समुद्ररूपाः प्रकीर्तिताः । समुद्रो यथा स्वमर्यादायामेव तिष्ठति, तथैतेपीति भावः । अत्र समुद्रोपि शुद्धोदो ज्ञेयः । अन्यानग्रे वक्ष्यन्तीति । किंच, एतेषु सामान्यतः समुद्रदृष्टान्त उक्तो, न तु कश्चन गुणदोषविशिष्टो धर्मस्तस्योक्त इति प्रवाहमार्गोद्धिन्नत्वं पूर्णत्वागाधत्वादयो धर्माश्च सूचिताः । यथा समुद्रमध्ये रत्नानि सारभूतानि, तथैतेषां हृदयेषु भगवद्धर्मा इति भावः ॥ १४ ॥

अतः परं समुद्रा अप्यनेकविधा इति तद्भेदान्निरूपयन्तो निंद्यं भावमाहुः ।

**लोकवेदगुणैर्मिश्रभावेनैके हरेर्गुणान् ॥ १५ ॥**

**वर्णयन्ति समुद्रास्ते क्षाराद्याः षट् प्रकीर्तिताः ।**

अयं भावः । एके भगवतो गुणा लोकसमाना एव, लोको यथा प्राकृतस्तथा भगवद्गुणा अपि प्राकृता एव, भगवानपि नास्ति, कर्मणैव सर्वं भवतीति मन्यन्ते, ते क्षारोदतुल्याः, न काचन तैः पुरुषार्थसिद्धिरिति भावः । केचन वेदानुसारेण धर्मान् मन्यन्ते, ज्ञानेच्छादयो जगत्कर्तृत्वादयो धर्मा भगवति सन्तीति तादृशा दधिमण्डोदतुल्याः । उभयांशसत्त्वात्तत्तुल्यता । तेपि तावन्मात्रधर्मानेव मन्यन्ते, न तु स्वरूपमवतारादिकं चेति तादृशा भावा न पुरुषार्थसाधका इति भावः । अपरे गुणैः प्रकृतिगुणैरविद्यायां धर्मे कृत्वा धर्मा भासन्ते, वस्तुतो धर्मा एव न सन्तीति मन्यन्ते, ते सुरोदतुल्याः, स्पर्शमात्रेपि धर्मनाशका मिथ्यावादिनः पुरुषार्थनाशका इति सर्वथा त्याज्या एवेत्यर्थः । एते त्रयोप्यमिश्राः । अथ मिश्रानाहुः । केचित्तु ये धर्मा लौकिकभावसहितास्ते लौकिका एव, ये ब्रह्मधर्मास्तेऽलौकिकाः सर्वे सन्तीति मन्यन्ते, ते मिश्राः क्षीरोदतुल्याः । स यथा स्वरूपतो मुक्तमस्तथापि मथनानन्तरं निःसारो जातः, सकलरत्नानां निर्गमात्, तथा तेषां तावन्मात्रधर्मवत्त्वेपि परमपुरुषार्थो न सिध्यतीति, न ते ग्राह्या इति भावः । यतो भगवतो 'लोकवल्लीलापि कैवल्य'मित्युक्तत्वात् तत्रालौकिकबुद्धिनिष्ठाभावात् न सत्सम्मता इत्यर्थः । अन्ये वेदोक्तधर्मा जगत्कर्तृत्वादयो यद्यपि सन्ति, तथापि न वास्तवा अविद्यासवलिताः, ब्रह्म तु निर्विकारमेवेति मन्यन्ते, ते घृतोदतुल्याः, घृतं विकृतं भवति, क्षीरपरिणामो दधि तत्परिणामो घृतमतस्तेपि विकृतत्वाद्गोकाराच्च ग्राह्याः, पुरुषार्थासाधकत्वात् । एके पुनर्भगवति धर्माः सन्ति, परं त्ववतारादिधर्मास्तु प्राकृता इति मन्यन्ते, ते इक्षु-

रसोदतुल्याः, यथेक्षुरसः स्वरूपतो मधुरः, परन्तु परिणामविरसस्तथैते धर्मा अपि परिणामे विरसत्वाङ्गीकारान्न पुरुषार्थसाधका इति भावः । पूर्वापेक्षया षण्णामेतेषां हीनभावत्वमुक्तम् । एवं विंशतिधा जीवाधिकारानुसारिणो भावा निरूपिताः । साधनसाध्या लोकवेदप्रसिद्धा इति ॥ १५३ ॥

अतः परं लोकवेदातीतः साधनासाध्यो भगवद्दानेनैवोत्पद्यते, नान्यथेत्येतादृशोऽपि कश्चन भावो वर्तत इति स्वकीयानां ज्ञापनार्थं कृपया तादृशभावस्य यथार्थस्वरूपं वदन्त एकविंशमपि भावं लक्षयन्ति ।

गुणातीततया शुद्धान्सच्चिदानन्दरूपिणः ॥ १६ ॥
सर्वानेव गुणान्विष्णोर्वर्णयन्ति विचक्षणाः ।
तेऽमृतोदाः समाख्यातास्तद्वाक्पानं सुदुर्लभम् ॥ १७ ॥

ये पुनर्विष्णोर्व्यापकस्य रसात्मकस्य च भगवतः सर्वे गुणाः, लोकानुसारिणो बाललचरित्रादयो, वेदानुसारिणो माहात्म्यप्रतिपादकाः मत्स्यधर्माः गुणानुसारिणः स्थित्युद्भवप्रलयरूपाः, रसात्मकलीलारूपाश्च, गुणातीता एव शुद्धा दोषरहिता निर्विकाराः सच्चिदानन्दरूपिणः सन्तीति मन्यन्ते, ते भक्ता अमृतोदतुल्याः, यथा अमृतस्य षड्रसात्मत्वेऽपि मधुरत्वमेवैवं भगवद्धर्माणामपि तत्तद्रूपत्वेऽपि सच्चिदानन्दरूपत्वमेव, न त्वन्यथा । यथा स्वरूपमानन्दरूपं रसात्मकम्, तथा गुणा अपीति निरूपितम् । किञ्च, समुद्रस्यामृतरूपत्वेनान्येभ्यो विशेष आधिक्यं दूरत्वमगाधत्वं मरणादिदोषनिवर्तकत्वं देवोत्तमैरेव भोग्यत्वं चोक्तं यथा, तथैते धर्मा अप्येतावद्धर्मवन्त एतदधिकारिभिरेव भोग्या इति सूचितम् । अत एवाधिकारिविशेषणं विचक्षणा इत्युक्तम् । तथा चोक्तं 'मुहुरहो रसिका भुवि भावुकाः' इति । अत एव रसिकजनानुभवैकवेद्यत्वादेते भावाः सर्वोत्तमाः । तादृग्भाववन्तो भक्ता अपि सर्वोत्तमा इति सर्वोत्तमाद्युक्तस्वरूपाप्तेः कथनमेतेषु युक्तम्, न तु पूर्वोक्तेषु शेषादिषु, सर्वसाधारणत्वात् । अतस्तत्राब्धिशब्दस्य तथा निरूपणं कृतम् । यद्यब्धिशब्दस्य कथनान्योऽप्यर्थो भवेत्तदा स एवोत्तमः, नास्माकं तत्राग्रहः । यथा विरोधो न भवेत्तथा ग्रन्थार्थो व्याख्येय इति भावः । एवं स्वतन्त्रभक्तिभावस्वरूपनिर्देशमपि कृत्वा तस्य दुर्लभत्वमाहुः तद्वाक्पानं सुदुर्लभमिति । अत एव 'भक्तिः स्वतन्त्रा शुद्धा च दुर्लभे'त्युक्तत्वादत्रापि ते भावा नोच्यन्ते इति भावः । अत एव 'शुद्धा प्रेम्णातिदुर्लभा' इत्यप्युक्तम् ॥ १७ ॥

एवं दुर्लभत्वे को हेतुस्तत्राहुः ।

तादृशानां क्वचिद्वाक्यं दूतानामिव वर्णितम् ।
अजामिलाकर्णनवद्विन्दुपानं प्रकीर्तितम् ॥ १८ ॥

तादृशानां वाक्यं क्वचिदेव भवति । उत्तमाधिकारिसंयोगे भवति, यथा शुकपरी-

क्षितयोः । यथा वा 'अक्षण्वता'मित्यादि । यथा वा भ्रमरगीते उद्धवं प्रति श्रीस्वामिनी-वाक्यानि । पुनस्तत्तत्स्वरूपज्ञानेनोद्धववाक्यानि । तादृशं वाक्यं दूतानामिव वर्णितं भवति । दूतास्तु यथार्थवक्तारो यथानुभूतं कथयन्ति, तथा तेषां वाक्यं स्वानुभूतत्वेन तथार्थमिति प्रमाणमित्यर्थः । ननु तादृशवाक्यस्यातिदुर्लभत्वेनाशक्योपदेशकथनं व्यर्थमित्याशङ्क्य तत्राहुः **अजामिलेति** । यथा अजामिले सर्वथानधिकारिण्यपि परमकृपया स्वनाममाहात्म्यं प्रकटितवान् प्रभुः, तथा तादृशे निःसाधनेपि कृपया परमानुग्रहेण तादृग् वाक्यं कदाचित्प्रकटीकरोति । अत एव क्वचिद्वाक्यं भवतीत्युक्तम् । अत एव तद्वाक्यमृतरूपबिन्दुपानं प्रकीर्तितम् । यथामृतस्य बिन्दुपानेप्यमरत्वं सिध्यति, तथा तावन्मात्रवाक्यश्रवणेपि तादृप्रूपत्वं समस्तभगवन्माहात्म्यस्वरूपज्ञानं च भवतीति भावः ॥ १८ ॥

ननु माहात्म्यज्ञाने जातेप्यविद्याधर्माणां विद्यमानत्वात्कथं परमफलं सेत्स्यतीति तत्राहुः ।

**रागाज्ञानादिभावानां सर्वथा नाशनं यतः ।**
**तदालेहनमित्युक्तं स्वानन्दोद्गमकारणम् ॥ १९ ॥**

तद्बिन्दुपानमात्रक्षणे स्त्रीपुत्रादिषु यो रागः स्नेहः, अज्ञानं भगवत्स्वरूपधर्मयोः, आदिपदेनासंभावनाविपरीतभावनादीनां च सर्वथा नाशनं नाशकारकं तद्वाक्यं भवति,एतयदा भवेत्तदालेहनं भगवत्स्वरूपनिष्ठभावैस्तदास्वादनं जायते, तेन प्रतिबन्धनिवृत्तिः सूचिता । इष्टप्राप्तिमाहुः **स्वानन्दोद्गमकारणमिति** । तदास्वादे पूर्वं तिरोहितानन्दस्य प्राकट्यम्, पश्चात् प्रेमासक्तिसङ्कल्पव्यसनोत्पादनेनान्तर्भगवत्स्वरूपानन्दाविर्भावो भवतीति भावः॥१९॥

ननु पूर्वोक्ता शेषादयः पूर्णा उक्ताः, तथाप्येतदपेक्षया न्यूनत्वात्तेषां धर्माणां कथं पूर्णत्वं फलसाधकत्वं च तत्राहुः—

**उद्धृतोदकवत्सर्वे पतितोदकवत्तथा ।**
**उक्तातिरिक्तवाक्यानि फलं चापि तथा ततः ॥ २० ॥**

उक्तातिरिक्ता अमृतोदतुल्यातिरिक्ताः शेषादयः तेषां वाक्यानि उद्धृतोदकवत्, यथा गङ्गात उद्धृत्य गृहे समानीतं जलमपि गङ्गाजलमेव, तथापि मर्यादामार्गविधिना स्नानपूजादिफलं प्रवाहस्थजल एव भवेन्नास्मिन्, तथा तेषां धर्माणामपि भगवद्धर्मरूपत्वं पूर्णत्वादिकं च तिष्ठत्येव, परन्तु पुष्टिफलप्रापकत्वं नेति भावः । पुष्टिफलं तु तादृग् बिन्दुपानजनितरसास्वादेनैव भवेन्नान्यथेति सूचितम् । एवं सति मर्यादामार्गीयभक्तिरसपूर्णत्वं पुरुषोत्तमसायुज्यफलकत्वं तेषां सम्पन्नमिति ज्ञापितम् । किञ्च, एतत्पोषकत्वेन द्वितीयं दृष्टान्तमाहुः **पतितोदकवदिति** । यथा वर्षाजलमाकाशात् पतितं यद्यपि शुद्धं निर्मलं, तथापि मध्ये गृहीतं चेत् कर्मादियोग्य न भवति, भूमौ पतितं चेत्कर्मादियोग्यं भवति, तथा तानि वाक्यानि शुद्धानि निर्मलानि, तथाप्येतादृशभक्तिरसभावाशयसंवलितत्वाभावादेतत्फलरूपस्वरूपसम्बन्धकारकाणि न भवन्तीति भावः । एतदेवोक्तं **फलं चापि तथा**

तत इति । यादृशो मार्ग यादृश वाक्य तादृशमेव फल भवेदिति भाव । अथवा, पूर्व स्वतन्त्रतया प्रमेयबलमाश्रित्योक्तम्, अधुना शास्त्रक्रमानुसारेणोच्यते । तथाहि, उक्तातिरिक्ता अमृतोदतुल्यातिरिक्ता शेषादयस्तेषा वाक्यानि उद्धृतोदकवदुपकार कुर्वन्ति । यथा जलाशयादुद्धृत गृहे समानीत जल गृहादिशोधकत्वेन स्नानाचमनादिनात्मशोधकत्वेन पाकादिकर्मकारकत्वेन तृषादिनिवर्तकत्वेन चोपकारक भवति, तथा तेषा वाक्यानि वाक्योक्तधर्माचरणादिना अविद्योपाधिककर्मनाशकत्वेन ज्ञानादिधर्मोत्पादकत्वेन सासारिकतापनिवर्तकत्वेन मुक्तिफलकत्वेन च प्रतिक्षणमुपकुर्वन्तीति भाव । तादृशस्थितौ विशेषानुग्रहश्चेत्तदा पुष्टौ प्रवेश, नो चेदुपकार एवेत्यर्थ । एतदेवोक्त सिद्धान्तमुक्तावल्या 'उभयोस्तु क्रमेणैव पूर्वोक्तैव फलिष्यती'ति । अतएव पुष्टिमार्गाधिकारो मुक्तानामेवेति 'मुक्तोपसृप्य' इत्याद्युक्तम् । किञ्च, एतत्पोषकत्वेन द्वितीय दृष्टान्तमाहु **पतितोदकवदि**ति । वर्षाजल पतितमुपकरोति, परन्तु मर्यादया पतित चेत् । नो चेत्सर्वसस्यादिनाशक भवेत् । एव मर्यादया धर्माचरणे फल भवेत्, नो चेदौद्धत्येन सर्वधर्मनाशो भवेदिति तेषा वाक्यानामुपकारकत्व पूर्णत्व फलसाधकत्व चोक्तम् । अत एव **फलं चापि तथा तत** इत्युक्तम् । ततस्तादृशवाक्यात् फल च तथा तदनुसारेणैव सायुज्य भवेदिति भाव ॥२०॥

अत परमुपसहरन्ति ।

> **इति जीवेन्द्रियगता नानाभावं गता भुवि ।**
> **रूपतः फलतश्चैव गुणा विष्णोर्निरूपिताः ॥ २१ ॥**

**इति** प्रकारका जीवेन्द्रियगता, जीवगता आत्मगामिन, इन्द्रियगता नियमगामिनः । अत एव भुवि स्थाधारे नानाभाव गतास्तादृशा विष्णो व्यापकस्य रसात्मकस्य च गुणा भावा रूपत स्वरूपत फलतश्च निरूपिता । एतेन सन्देहनिवृत्तिपूर्वक भगवन्मार्गप्रवृत्तौ फल भविष्यतीति ज्ञापितम् ॥ २१ ॥

> यथामति मया भावा रूपत फलतोपि हि ।
> निरूपितास्तत्र किञ्चिद् बुद्धिदोषेण यद्भवेत् ।
> *अन्यथा तत्सकरुणा क्षमन्ता प्रभवो मम ॥ १ ॥*

**इति श्रीवल्लभकृतं श्रीजलभेदविवरणं संपूर्णम् ॥**

---

श्रीकृष्णाय नमः ।

# जलभेदः ।

## श्रीबालकृष्णकृतविवृतिसमेतः ।

श्रीराधिकावदनपद्ममरन्दपानघूर्णायमाननयनः [1]स्फुटलाञ्छनश्रीः ।
मन्दस्मितो रतिविलासजयोदिताङ्गकान्तिः सदा स्फुरतु मद्धृदि गोपिकेशः ॥ १ ॥
भावाब्धिमथनाचार्यचरणान् नौमि संततम् ।
गोपीशभावभावाप्तिर्यत्कृपातो न दुर्लभा ॥ २ ॥

श्रीमदाचार्यचरणाः स्वीयानां भावज्ञानेन पूर्णप्रेमभावोत्पत्त्यर्थं भावनिरूपणं प्रति-
जानते । यथा निर्विघ्नतासिद्ध्यर्थं मङ्गलाचरणस्य शिष्टाचारत्वं, तथात्र स्वीयेषु निर्विघ्नभा-
वोत्पत्तिसिद्ध्यर्थं भगवन्नमस्करणात्मकं मङ्गलमाचरन्ति नमस्कृत्येति ।

**नमस्कृत्य हरिं वक्ष्ये तद्गुणानां विभेदकान् ।**
**भावान् विंशतिधा भिन्नान् सर्वसन्देहवारकान् ॥ १ ॥**

हरिमकारणसर्वदुःखहर्तारं नमस्कृत्य तद्गुणानां तदीयभक्तगुणानां विभेद-
कान् विशेषेण भेदबोधकान् भावान् वक्ष्ये इति सम्बन्धः । विंशतिप्रकारेण भिन्नान्
तान् वक्ष्य इत्यर्थः । ननु एतत्कथनं किंप्रयोजनकमित्याकाङ्क्षायामाहुः **सर्वसन्देहवा-
रकानिति** । यच्छ्रवणात् सर्वेषां सन्देहाभावः स्यादित्यर्थः । यद्वा, सर्वे भगवति आसि-
सन्देहवारका इति भावः ॥ १ ॥

एवं प्रतिज्ञाय भेदानेवाहुः **गुणभेदा इति** ।

**गुणभेदास्तु तावन्तो यावन्तो हि जले मताः ।**
**गायकाः कूपसङ्काशा गन्धर्वा इति विश्रुताः ॥ २॥**

यावन्तो जले भेदा वेदोक्तास्तावन्तो गुणभेदा ज्ञातव्या इत्यर्थः । अत्र 'कूप्याभ्यः
स्वाहे'त्यारभ्य 'सर्वाभ्यः स्वाहे'त्यन्ता श्रुतिरनुसन्धेया । गुणानां जलसाम्योक्त्या
स्वतः शुद्धत्वं बोध्यते । 'आपः स्वभावतो मेध्या' इत्यादिवाक्येभ्यो जलानां स्वतःशुद्धत्वं,
तथैव भगवत्सम्बन्धित्वाद्गुणानामिति भावः । यथा जलमन्यमेलने तदात्मकतां भजते, तत्र
च स्वस्वरूपात्मकतां च करोति, तथा भगवानपि भक्तभावमेलने स्वगुणान् तद्भावसा-
म्यान् करोति, तं च स्वीयं स्वसमं करोति ।

ननु भक्तस्य प्रभुसाम्यता कथमिति चेदुच्यते । तदसाम्यत्वे भक्तत्वमेव न स्यात् ।
अत एवोक्तं 'देवो भूत्वा देवान् यजेत्' 'यो यच्छ्रद्धः स एव सः' इत्यादि च । तस्माद्भ-

1 स्फुटालङ्कृतश्रीरिति मूले पाठः ।

फलेपि न हानिर्यतो तद्भजनस्यैव स धर्मो, न त्वन्यधर्म इति त्वदुक्ताशङ्कागन्धलेशोपि नेत्यलम् । तत्र प्रथम भगवतो रसरूपत्वाद्रमणैकस्वभावत्वात् तत्र च गानमुख्यता श्रुत्योच्यते 'यदा खलु वै पुरुषो श्रियमश्नुते तदा वीणास्मै वाद्यते' इत्यादि । तस्माद्गानप्रियो भगवानिति गायकाना भावमाहु गायका इति । विश्रुताः प्रसिद्धा गानरसज्ञा ये गायकास्ते कूपसङ्काशास्तेपा भाव कूपजलतुल्य इत्यर्थ । यथा कूपोदक शीतकाले अन्त रुष्णं, घर्मकाले बाह्यत शीत, तथैतेपामपि भावोपि श्रवणानन्दत्वेनोपरि शीतलस्तदनन्तर रसबोधे भगवदप्राप्त्यर्थं मनस्तापक । तथा सति अतिप्रचुरबाह्यतापे सति भगवच्छ्रणसुखदत्वेनान्त शीतल इति भाव । ननु एतेपा भगवद्गुणसम्बन्धस्त्वेन गानाभावात् कथ भगवद्भाव इति चेत् ? उच्यते । भगवत्स्वरूपस्य नादब्रह्मात्मकत्वाद्यथास्थितनादस्वरूपज्ञाने भगवत्प्राप्तिरिति भाव । अत एव सङ्गीतशास्त्रे निरूपित 'वीणावादनतत्त्वज्ञ श्रुतिजातिविशारद । तालक्रियाप्रयासेन मोक्षमार्गं लभेत हि' इति । यथा कौप जल गुणेनैव ग्राह्य, तथैतेपा भावो भगवत्त्वगुणत्वेनैव गृह्यत इति भाव ॥ २ ॥

ननु गायकानामनेकभेदवत्त्वात् कथ सर्वेषा तुल्यतेत्याशङ्क्याहु कूपभेदास्त्विति ।

**कूपभेदास्तु यावन्तस्तावन्तस्तेपि सम्मताः ।**
**कुल्या पौराणिकाः प्रोक्ताः पारम्पर्ययुता भुवि ॥ ३ ॥**

यावन्त कूपभेदा सन्ति तावन्त एव गायकभेदा सम्मता इत्यर्थ । यथा केचित् कूपा मिष्टान्नपरिपाचकत्वे सुरतरूपक्षस्था , केचिद्गुरुत्वादन्नपरिपाककारिण , केचित् क्षारा शुद्धादिहेतव , एवमनेकभेदास्तथा तेपि भगवद्गुणनिरूपणार्थज्ञानयुक्ता , केचिच नादब्रह्मात्मकस्वरूपज्ञा , केचिद्गानमाधुर्यपरा बहुभेदा सन्ति इति यावन्तस्ते तावन्तस्तेयामपि भेदा ज्ञेया इति भाव । प्रथमभाव निरूप्य द्वितीयमाहु कुल्याः पौराणिका इति । पौराणिका पुराणज्ञा कुल्या प्रोक्ता । कृत्रिमसरित्तुल्या उक्ता इत्यर्थ । यतो भुवि पारम्पर्ययुता , परस्या यथा परम्परया पुराण श्रुत्वा वर्णयन्ति, न तु स्वतो निर्धारयन्ति, तेपा भावस्तज्जलतुल्य इत्यर्थ । यथा कृत्रिमा नदी प्रत्यह खननादियत्नैरेव प्रवहति, प्रमादादप्ययत्नो वालुकादिभि सुनिहता भवति, तथा तेपामपि नित्य पुराणादिदर्शन एव भावो भवति, नान्यदा । यथा तस्या पारम्पर्यता शुल्येव तडागादिषु, न तु स्वत प्रवहन्नदीनत्वत् सादित्व समुद्रगत्व च, तथैतेपामपि पुराणदर्शनकाल एवोत्पत्तिस्तत्रैव च समाप्तिर्न तु दयासमुद्रभगवत्प्राप्तिरित्यम् ॥ ३ ॥

तृतीयमाहु क्षेत्रप्रविष्टा इति ।

**क्षेत्रप्रविष्टास्ते चापि ससारोत्पत्तिहेतवः ।**
**वेश्यादिसहिता मत्ता गायका गर्तसञ्ज्ञिकाः ॥ ४ ॥**

ते च पौराणिका । गायकनिरूपणानन्तर पौराणिकनिरूपणेन पुनश्च गायकनि-

रूपणेन पुराणोक्तभगवल्लीलानिरूपका गायका इवेत्यर्थः। गानस्य यथा चित्तहारकत्वम्, तथा पुराणानामपीति तन्मध्यनिरूपणमिति भावः। क्षेत्रप्रविष्टाः स्वकुटुम्बपोषणाजीविकार्थं पुराणनिरूपकाः ये ते संसारोत्पत्तिकुटुम्बपोषणसाधनोत्पत्तिहेतवो भवन्ति इत्यर्थः। चकारेण भगवद्गुणवर्णकानामनुचितः संसारः, तथापि तदर्थमेव कृतत्वात् तथेति भावो बोध्यते। अपिशब्देन संसारोत्पत्तिरपि भगवद्गुणविक्रेतुर्न भवेत्, परं भगवन्माहात्म्यवत्त्वेवेति बोध्यते। यथाल्पसरिदपि क्षेत्रे प्रविष्टा सती संसारोत्पत्तिहेतुरन्नाद्युत्पादिका भवति, न तु स्नानपानयोग्या। तथैतेषां भावोपि पुराणदर्शनेन स्वात्मशोधको न भवति, किन्तु जीविकाहेतुरेव भवतीत्यर्थः। अत एव पुराणोपजीवका नीचा उक्ताः। 'नीचा पौराणिकाः स्मृता' इति। चतुर्थं भावमाहुः वेदयादिसहिता इति। वेदयादिसहिता मत्ता ये गायकास्ते गर्ततुल्या इत्यर्थः। यदि गानस्वरूपज्ञानेन दोषरहिताः स्युस्ते नादं ज्ञात्वा मुक्त्यधिकारिणो भवेयुः, परं मत्तत्वाद्विषयाभिनिविष्टास्तेन तेषां भावो गर्तजलतुल्य इत्यर्थः। यथा गृहमध्यकृतगर्तसञ्चितजलस्य तद्गृह एव व्यवहारयोग्यत्वम्, न तु कूपादिवत् सर्वोपयोगित्वं शुद्धिकरत्वं वा; तथैतेषां भावो गानमाधुर्याद्विना तद्धृदयानन्दकर एव, न तु पुरुषार्थसाधकोपि, तदर्थमपि नादस्य ब्रह्मात्मकत्वाद्भगवतो गानप्रियत्वात् तद्रसज्ञत्वात्तेष्वपि आनन्दोद्भवो भगवता दीयत इति भावः। मत्तत्वादिदोषरहिताः पूर्वोक्तसहिता गायकाः कूपादितुल्या इति भावः। यथा कूपोदकं गुणैकग्राह्यं भवति, जलग्रहणपर्यन्तमेव गुणकार्यं, न तु तदनन्तरमपि, तथा स्त्रीगानस्य मधुरत्वात् तद्द्वारा नादब्रह्मानन्दानुभवार्थमेतत्साहित्यमिति भावः॥ ४॥

पञ्चमं भावमाहुः जलार्थमेव गर्तास्त्विति।

**जलार्थमेव गर्तास्तु नीचा गानोपजीविनः।**
**ह्रदास्तु पण्डिताः प्रोक्ता भगवच्छास्त्रतत्पराः॥ ५॥**

तुशब्दः पूर्वगतसाम्यत्वं निराकरोति। प्रक्षालनोच्छिष्टजलनिःसरणार्थं ये गर्तास्तत्तुल्या गानोपजीविन इत्यर्थः। यथा गर्तजलं नीचादिस्पर्शयोग्यमेव, न तु शुद्ध्यादिकरं, तथैतेषां भावोपीत्यर्थः। नीचत्वादेतेषां गानश्रवणमपि भगवद्भक्तैर्न कार्यमिति भावः, तद्गानस्यानन्दराहित्यादित्यर्थः। षष्ठं भावमाहुः ह्रदास्त्विति। भगवच्छास्त्रगीतापञ्चरात्रश्रीभागवतादिषु तत्परास्तदेकनिष्ठाः पण्डिताः ह्रदाः प्रोक्तास्तेषां भावो ह्रदजलतुल्य इत्यर्थः। तुशब्देन भगवच्छास्त्राभ्यासरतो न त्वन्य इत्यर्थो ज्ञाप्यते। यथा ह्रदजलं तरङ्गावर्तादिरहितं अन्तःशीतलं जलक्रीडादियोग्यं भवति, तथैतेषां भावोपि पण्डितत्वात् चाञ्चल्यरहितमनोनिवर्तनाद्यनुपहतो भगवच्छास्त्रतत्परत्वात् अनिरूपितभगवत्क्रीडानिरूपणयोग्य इति भावः॥ ५॥

सप्तमं भावमाहुः **सन्देहवारका इति ।**

**सन्देहवारकास्तत्र सूदा गंभीरमानसाः ।**
**सरःकमलसम्पूर्णाः प्रेमयुक्तास्तथा बुधाः ॥ ६ ॥**

तत्र भगवच्छास्त्रसन्देहवारकाः सर्वमतनिराकरणपूर्वकभगवन्मार्गस्थापका गम्भीरं मनो येषां ते सूदाः सुष्ठु उदकं येषामेतादृशा ह्रदविशेषतुल्याः । तेषां भावस्तद्ध्रदोदतुल्य इत्यर्थः । जले शुक्तिशैवालाद्यावरणरहिताः गम्भीरमानसोक्त्या अन्तः कालुष्यान्याश्रयादिदोषरहिता इति भावः । यथा ह्रदजलं गम्भीरत्वे घर्मकालेऽन्तःशीतलं उपरि तप्तञ्च भवति; तथैतेषां भावोप्यन्तर्भगवत्सम्बन्धाच्छीतलो बहिर्लौकिकनिवृत्यर्थं सन्तप्त इति भावः । अष्टमं भावमाहुः **सरःकमलसम्पूर्णा इति ।** यथा पूर्वोक्तप्रकारकसन्देहवारकाः बुधाः प्रेमयुक्ताः सन्तः सरःसम्बन्धिकमलपरिपूर्णाः, परन्तु नादगायकतुल्यास्तेषां भावस्तज्जलतुल्य इत्यर्थः । यथा तज्जलं सुरभिशीतलयुक्तत्वात् लक्ष्मीनिवाससुक्तभगवत्सेवोपयोग्यं, तथैतेषां भावोपि । सौरभवत् प्रसररूपः परतः पावनो हृत्कमले मजसीमन्तिनीभावस्थितिसहितभगवत्सेवोपभोग्यो भगवचरणाब्जमकरन्दपानमत्तमधुपायितचित्तकुन्तलालिश्चेति भावः ॥ ६ ॥

नवमं भावमाहुः **अल्पश्रुता इति ।**

**अल्पश्रुताः प्रेमयुक्ता वेशन्ताः परिकीर्तिताः ।**
**कर्मशुद्धाः पल्वलानि तथाल्पश्रुतिभक्तयः ॥ ७ ॥**

अल्पं श्रुतमध्ययनं येषां ते प्रेमयुक्ताः सन्तो वेशन्ताः सरस्तद्वत् परिकीर्तिताः । तेषां भावस्तज्जलतुल्य इत्यर्थः । यथा तज्जलं वर्षाशरत्काले निर्मलं घर्मकाले पश्चात्प्रसङ्गाच्च कलिलं भवति, तथैतेषां भावोपि भगवत्सेवादिषु प्रेमयुक्तत्वान्निर्मलो भवति, परमल्पाध्ययनत्वात् असत्कृलौकिकतापादिना कालुष्यादिकमाप्नोति इत्यर्थः । दशमं भावमाहुः **कर्मशुद्धा इति ।** कर्मत्वेन ये भगवत्परिचर्या कुर्वन्ति ते कर्मशुद्धाः, अत एव भगवतोक्तं 'मत्कर्मपरमो भवे'त्यादि । अन्यथा कर्मणा न शुद्धत्वकारणं स्यात् । अत एव 'यस्य स्मृत्या'दि स्मर्यते । तस्मात् सर्वोत्कृष्टत्वयज्ञकर्मात्मकत्वमेव सेवायज्ञत्वात् सेवन्ते, ते कर्मशुद्धास्तेषां भावः पल्वलमल्पसरोविशेषस्तत्तुल्य इत्यर्थः । यथाल्पसरोजलं पानयोग्यं भवति, न तु स्नानावगाहनयोग्यं, तथैतेषां भावोपि भगवत्पूजाकर्मत्वाद्यत्किञ्चित् फलदो, न तु भगवदवगाहनयोग्य इति भावः । तथैवाल्पश्रुतिभक्तयः अल्पं श्रुतिः श्रवणं भागवतादिषु भगवन्माहात्म्यस्य, तया भक्तिर्येषां तेपि तत्तुल्या एवेत्यर्थः । अल्पश्रुत्युत्पन्नभक्तित्वेनादृढत्वात् तथेत्यर्थः ॥ ७ ॥

एकादशं भावमाहुः **योगध्यानादिना संयुक्ता इति ।**

**योगध्यानादिसंयुक्ता गुणा वर्ष्याः प्रकीर्तिताः ।**
**तपोज्ञानादिभावेन स्वेदजास्तु प्रकीर्तिताः ॥ ८ ॥**

योगोऽष्टाङ्गः, ध्यानं प्रादेशाङ्गुष्ठमात्रादेः । तत्संयुक्ताः गुणाः भावाः धर्म्याः तज्जलतुल्याः प्रकीर्तितास्तेषां भावस्तत्तुल्य इत्यर्थः । यथा वर्षाकाले जलं सर्वत्र सुलभं परमचिरस्थायि तथैतेषामपि योगादिसमय एव भगवद्भावो, न सर्वदेति भावः । द्वादशं भावमाहुः **तपोज्ञानादिभावेनेति** । तपः कृच्छ्रादि, ज्ञानं जीवात्मनः । आदिपदेन विद्याविद्याबन्धमोक्षज्ञानं षोडशपदार्थज्ञानं लौकिकैः (कर्म)भिर्यो भावस्तेन संयुक्ताः स्वेदजास्तु प्रकीर्तिताः स्वेदजतुल्याः कथिताः इत्यर्थः । तेषां भावः स्वेदजतुल्य इत्यर्थः । केचित् तपसैव भगवान् प्राप्यत इति ज्ञात्वा तप एव कुर्वन्ति, केचित् ज्ञानेन जीवात्मज्ञानेन मोक्षो भवति, 'ज्ञानादेव हि कैवल्य'मिति ज्ञात्वा ज्ञानार्थमेव यतन्ते । केचित् षोडशपदार्थज्ञानेनैव मोक्ष इति तज्ज्ञानार्थं न्यायादिकं पठन्ति, ते सर्वे एवाज्ञाः । यतो भगवत्प्राप्तिस्तु भक्त्यैव, न तैः, अत एव भगवतोक्तं 'नाहं वेदैर्न तपसे'त्यारभ्य 'भक्त्या त्वनन्यया शक्य' इत्यन्तम् । 'रहूगणैतत्तपसे'ति च । तस्मात् तेषां भावस्तत्तुल्य इत्यर्थः । यथा स्वेदजं जलं स्नानाद्ययोग्यं, अस्वादु, तापकरम् । तथैतेषां भावोपि नात्मशोधकः, नापि भगवत्प्राप्तिकरः, तापक्लेशादिकर एवेत्यर्थः । जलसाम्यत्वेन हेयार्थश्च वर्णित इत्यर्थः ॥ ८ ॥

त्रयोदशं भावमाहुः **अलौकिकेन ज्ञानेनेति** ।

> **अलौकिकेन ज्ञानेन ये तु प्रोक्ता हरेर्गुणाः ।**
> **कादाचित्काः शब्दगम्याः पतच्छब्दाः प्रकीर्तिताः ॥ ९ ॥**

अलौकिकेन भगवद्दत्तेन महत्तमचरणरजोभिषेकजेन वा ज्ञानेन हरेरकारणसर्वदुःखहर्तुः कादाचित्काः कदाचिदेव स्त्रीयाणां दर्शनतापनिवृत्त्यर्थं प्रकटीकृताः प्रतीयमाना गुणाः शब्दगम्याः वेदादिगम्याः श्रुतिरूपव्रजवरवधूरूपैकगम्याः ये वर्णयन्ति ते पतच्छब्दाः पर्वतशिखराद्धारापतने ये शब्दाः तत्सदृशाः प्रकीर्तिताः निरूपिताः इत्यर्थः । तेषां भावस्तज्जलतुल्य इत्यर्थः । यथा धाराजलशब्दाः तत्र जलस्थितिज्ञापकास्तथा तद्वर्णनमपि तद्धृदि भगवत्स्थितिं बोधयतीत्यर्थः । धारा अपि शब्दगम्या भवन्ति, भावा अपि तथैवेत्यर्थः ॥ ९ ॥

चतुर्दशं भावमाहुः **देवाद्युपासनोद्भूता इति** ।

> **देवाद्युपासनोद्भूताः पृष्वा भूमेरिवोद्गताः ।**
> **साधनादिप्रकारेण नवधा भक्तिमार्गतः ॥ १० ॥**
> **प्रेमपूर्त्या स्फुरद्धर्माः स्यन्दमानाः प्रकीर्तिताः ।**
> **यादृशास्तादृशाः प्रोक्ता वृद्धिक्षयविवर्जिताः ॥ ११ ॥**
> **स्थावरास्ते समाख्याता मर्यादैकप्रतिष्ठिताः ।**

देवाः शिवादयः, आदिपदाद्दुर्गाभैरवादयः, तेषां उपासने प्रोद्भूताः तत्र भगवत्त्वेन सर्वेश्वरत्वेन मोक्षसाधकत्वेन ये भावास्ते भूमेः सकाशादुत्पन्नाः तुषारजलकणा इवेत्यर्थः । तेषां भावस्तज्जलतुल्य इत्यर्थः । तेषां तद्भजनेन किञ्चित्फलं, किन्तु भगवतो-

ऽन्यथा चिन्तितत्वान्नरकः । अत एव 'योन्यथा सन्त'मित्युक्तम् । यथा तज्जलं न स्नानादियोग्यं किन्तु स्वाधारमपि पंकिलं करोति, तथैतेषां भावोपि न शुद्ध्यादिकमुत्पादयति, मोक्षसाधको वा भवति, परं देवानां भक्तत्वात् स्वाधिसाम्यतया भजंन्तमनुकारयति इत्यर्थः । पञ्चदशं भावमाहुः । साधनादिप्रकारेणाग्निहोत्रनित्यकर्मादिसहितश्रवणादिनवधाभक्तिरूपो मार्गस्तेनैव प्रेमपूर्त्या ये स्फुरद्धर्मास्ते स्यन्दमानास्ते प्रस्रवणतुल्याः प्रकीर्तिता इत्यर्थः । तेषां भावस्तज्जलतुल्य इत्यर्थः । यथा तज्जलं पर्वतादिवृष्ट्यादितुल्यात् वर्धते, आतपादिषु च हीयते, तथैतेषां भावोपि साधनसत्सङ्गैर्वर्धते, दुःसङ्गादिभिश्च गौणतां प्राप्नोतीत्यर्थः । अत एव कपिलदेवैः साधनत्वेन देवहूतिं प्रति सत्सङ्ग उक्तः 'सङ्गस्तेष्वथ ते प्रार्थ्य'इति । यद्वा, नवधाश्रवणादिरूपभक्तिमर्यादामार्गीयसाधनादिप्रकारेण स्फुरद्रूपा धर्माः दानव्रततपोहोमेत्यादिरूपाः येषु तेषां भावः स्यन्दमानजलतुल्य इत्यर्थः । यथा तज्जलं वृष्ट्यादिसापेक्षं तथैतेषां भावोपि धर्मसापेक्षः इति भावः । षोडशं भावमाहुः यादृशाः पूर्वमुक्तास्तादृशाः सङ्गादिना वृद्धिक्षयविवर्जिताः सम्यक् प्रकारेण प्रसिद्धा इत्यर्थः । निरूपिता वा । यथा नवधाभक्तिमार्गमर्यादायामेव मुख्यतया प्रतिष्ठिताश्चेत् तदा ते स्थावराः समाख्याताः सम्यक् प्रकारेण प्रसिद्धा इत्यर्थः । निरूपिता वा । यथा तज्जलं नानपादिभिर्ह्रासं प्राप्नोति, न वा वृष्ट्यादिभिर्वर्धते, न तरङ्गफेनावर्तादिभिः क्षुब्धं भवति तथैतेषां भावोपि दुःसङ्गादिभिर्न क्षीणतां भजति, न वा भक्तसङ्गेन वर्धते, तद्दर्शनेन न क्षुब्धो भवतीत्यर्थः ॥ ११½ ॥

सप्तदशं भावमाहुः अनेकजन्मसंसिद्धा इति ।

**अनेकजन्मसंसिद्धा जन्मप्रभृति सर्वदा ॥ १२ ॥**
**सङ्गादिगुणदोषाभ्यां वृद्धिक्षययुता भुवि ।**
**निरन्तरोद्गमयुता नद्यस्ते परिकीर्तिताः ॥ १३ ॥**

अनेकजन्मभिः कृत्वा सम्यक्प्रकारेण सत्सङ्गादिभिः भगवत्कृपया वा सिद्धाः साक्षात् सेवायोग्यं जन्म प्राप्तवन्तः जन्मप्रभृति आजन्मतो भगवद्भजनतत्पराः सर्वदा सर्वजन्मसु एतादृशाः भगवद्भक्ताः समुद्रगामिनदीतुल्याः परिकीर्तिताः कथिता इत्यर्थः । तेषां भावस्तज्जलतुल्य इत्यर्थः । यथा तेषां जलानां वर्षादिजलवृद्धिसापेक्षत्वं, स्वतश्च समुद्रगामित्वं, तथैतेषां भावोपि सापेक्षो भगवद्गामी चेत्यर्थः ॥ १३ ॥

अष्टादशं भावमाहुः एतादृशा इति ।

**एतादृशाः स्वतन्त्राश्चेत्सिन्धवः परिकीर्तिताः ।**
**पूर्णा भगवदीया ये शेषव्यासाग्निमारुताः ॥ १४ ॥**
**जडनारदमैत्राद्यास्ते समुद्राः प्रकीर्तिताः ।**

एतादृशाः पूर्वोक्ताः स्वतन्त्राः श्रवणसङ्गाद्यपेक्षारहिता निरुपाधिकाः । स्वतन्त्रा एव भगवद्भजनपराः सिन्धवः समुद्रगामिनदीतुल्या इत्यर्थः । तेषां भावस्तज्जलतुल्य

इत्यर्थः । यथैतज्जलं न वृष्ट्यादिजलसापेक्षं स्वतः समुद्रगामि, तथैतेषां भावोपि नान्यसापेक्षो द्यासमुद्रं भगवन्तं प्रविशतीति भावः । एकोनविंशं भावमाहुः **पूर्णा भगवदीया** इति । ये **पूर्णा भगवदीया** भगवत्तोषं विना नान्यं जानन्ति, येषां सेवयैव तापापगमः, भगवदाज्ञाकारिणस्ते समुद्राः प्रकीर्तिताः कथिता इत्यर्थः । तेषां भावो रत्नाकरतुल्य इत्यर्थः । तानेव वर्णयन्ति **शेषव्यासाग्निमारुताः** इति । **शेषो** भगवत्सेवापरः स्वसुखादिकमविचार्य शय्यादिभावेन भगवन्तं सेवते, तेनैव चात्मसुखं मन्यते । **व्यासः** कलावतारः सर्वोद्धारार्थं भगवद्गुणनिरूपणपरः, यस्य साक्षात् समाधिलब्धभगवद्दर्शनानन्तरं भक्तिशास्त्रनिरूपणेनात्मप्रसादः । **अग्निर्महादेवो** यः सर्वविरुद्धमोहशास्त्रमपि सृष्ट्याद्यर्थं भगवदाज्ञया स्वस्य तदीयत्वेन कृतवान् । अत एव 'वैष्णवानां यथा शम्भुः' इति श्रीभागवते । अत्र महादेवस्य नाम विहायाष्टमूर्तिस्थाग्नित्वकथनेन मोहशास्त्रकरणे जयापदहकत्वमुक्तम् । **मारुतो** हनुमान् श्रीकोशलेन्द्रचरणसेवनपरः । **जडो** जडभरतः भगवत्प्रेमानसत्वाज्जडवत् तिष्ठति । नारदः सदा भगवद्गुणगानेन भगवतोप्यानन्दजनकः । अत एव श्रुतिः 'यदा खलु वै पुरुषः श्रियमश्नुते तदा वीणाऽस्मै वाद्यत' इति । मैत्रो मैत्रेयः पराशरशिष्यो भगवद्धर्मवक्ता। आद्यपदात् प्रह्लादादयः । तेषां भावो समुद्रतुल्यः रत्नाकरतुल्य इत्यर्थः । यथा समुद्रोन्तः रत्नमयस्तथा चैतेप्यन्तर्भावयुक्ताः, अत एव कपिलैरुक्तं 'भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते' इति।

पूर्णभावान् मार्गस्वरूपज्ञानभेदेन विशेषतो वर्णयन्ति **लोकवेदगुणैरिति** ।

**लोकवेदगुणैर्मिश्रभावेनैके हरेर्गुणान् ॥ १९ ॥**
**वर्णयन्ति समुद्रास्ते क्षाराद्याः षट् प्रकीर्तिताः ।**

एके लोकमिश्रभावेन एके वेदमिश्रभावेन हरेर्गुणान् वर्णयन्ति । ते यथाक्रमं क्षाराद्याः क्षार आदिर्येषां ते षट्संख्याकाः प्रकर्षेण कीर्तिताः कथिता इत्यर्थः। तेषां तेषां भावो भिन्नतया तत्तत्समुद्रजलतुल्य इत्यर्थः । रामकृष्णौ मनुष्यावेव परं बलतेजोधिकाविति देवौ वेति ज्ञात्वा गुणवर्णनपराः क्षारसमुद्रतुल्यास्तेषां भावस्तज्जलतुल्य इत्यर्थः । यथा क्षारजलं न तृषानिवर्तकं, नापि स्नानादिसुखकारि, किन्तु गम्भीरं मलादिनिवर्तकं तथैतेषां भावोपि न संसारतापनिवर्तको, नापि श्रवणेऽन्येषां भक्तिसम्पादकः, किन्तु देवादिज्ञानेन तत्स्वरूपशोधकः । बलाधिक्यादिगुणश्रवणेनान्येषां मर्यादाभक्तानां यत्किंचिदानन्दकारीति भावः। ये तु वेदरक्षार्थं भगवदवताराः, नतु भगवानानन्दमयः श्रीकृष्ण एवेति ज्ञात्वा गुणवर्णनपरास्ते दधिमण्डोदतुल्यास्तेषां भावस्तज्जलतुल्य इति भावः । यथा दधिमण्डस्यासारत्वात् न प्राणपोषकत्वं न वा चित्ततापनिवर्तकत्वं, तथैतेषां भावस्यापि सच्चिदानन्दमयज्ञानाभावान्न मोक्षौपयिकत्वं न वा संसारनिवर्तकत्वमिति भावः । मायया सत्त्वादिगुणैर्गुणमयं देहमाश्रित्य भगवान् सृष्ट्यादिकं करोति न स्वत इति ये गुणान् वर्णयन्ति

तेषां भावः सुरोदतुल्य इत्यर्थः । यथा सुरा स्वरूपविस्मारिका पानकर्तुरिन्द्रियदोषजनिका, तथैतेषां भावोपि भगवद्गुणानां सम्बन्धित्वेपि मायामोहनस्वरूपविस्मारणं कारयति, स्वसम्बन्धेनान्यस्यापि तथात्वं सम्पादयतीति भावः । हरिः सर्वदुःखहर्ता 'स सर्वज्ञः सर्वशक्ति'रित्यादिश्रुतिगोचरात् कारणभूतः सर्वं स्वेच्छयैव करोतीति ये गुणान् वर्णयन्ति ते क्षीरोदतुल्यास्तेषां भावस्तज्जलतुल्य इत्यर्थः । यथा क्षीरे स्वादुत्वं वीर्यजनकत्वमपित्वे माधुर्याधिक्यं, तथैतेषां भावस्यापि मनोहरत्वमधिकगुणगानार्थं शुद्धयाधिक्यं तापानन्तरं च रसात्मकलीलाकर्तृत्वज्ञानानन्तरं तन्निरूपणेन माधुर्यत्वमिति भावः । भगवानलौकिकवीर्यवान् स्वीयान् साधनरहितान् अपि स्ववीर्येणैव मोचयतीति ये गुणान् वर्णयन्ति तेषां भावो घृतोदतुल्यः इत्यर्थः । यथा घृतं अन्यसम्बन्धं विनापि स्वपानेन बलवन्तं रोगमुक्तं च करोति, तथैतेषां भावोपि संसारसागरतरणाय योग्यदेहं करोतीति भावः। भगवान् हरिः शिवदुर्गाप्रभृतिभिः प्राप्तस्थानलक्षणस्तैर्मुहुरभिप्रार्थ्यचरणरेणुरिति चतुर्वर्गार्थं स एव सेव्य इति ये गुणगानपरास्तेषां भाव इक्षुरसतुल्य इत्यर्थः । यथेक्षुरसो मधुरोन्तस्तापनोदी, तथैतेषां भावोपि सर्वसेव्यत्वज्ञानेन मधुरः सेवनप्रवृत्तौ च त्रिविधतापनिवारकश्चेति भावः । 'अन्ये चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्' इत्यादिवाक्येभ्यः पुराणपुरुषोत्तमो भगवान् प्रवाल्पाश्रयरहितोऽसौ भक्त्यर्थं सेव्य इति ये गुणवर्णनपरास्ते शुद्धोदतुल्यास्तेषां भावः शुद्धोदतुल्य इत्यर्थः । यथा शुद्धोदं तृषादिनिवर्तकं स्नानादिना मलनिवर्तकं तापापहारी च, तथैतेषां भावोपि तृष्णादिनिवारकः पापनिवर्तकस्तापनिवर्तक इति भावः ॥ १५३ ॥

पूर्णभगवदीयेषु मुख्यान्निरूपयन्ति गुणातीततयेति ।

गुणातीततया शुद्धान् सच्चिदानन्दरूपिणः ॥ १६ ॥
सर्वानेव गुणान् विष्णोर्वर्णयन्ति विचक्षणाः ।
तेऽमृतोदाः समाख्याताः तद्वाक्पानं सुदुर्लभम् ॥ १७ ॥

ये गुणातीतभावनाशुद्धाः केवलं सच्चिदानन्दरूपिणो भगवद्रूपाः गुणा इति ये सर्वानेव गुणान् न्यूनाधिकभावेन सर्वान् एव, श्रीयशोदायामाविर्भावमारभ्य रासोत्सवप्रभृत्यानृतपर्यन्तं विष्णोर्व्यापकस्य सर्वत्र तत्तद्रूपस्य ये वर्णयन्ति विचक्षणाः भगवल्लीलादिकरणरसज्ञातारः ते अमृतोदाः समाख्याताः सम्यक् प्रकारेण कथिताः । तेषां भावः सुधासम इति भावः । यथा सुधायाः अमृतसम्पादकत्वं देवभोग्यत्वं तथा एतेषां भावस्यापि भगवत्त्वेनायोग्यदेहसम्पादकत्वं भगवद्भोग्यत्वं तदितराभोग्यत्वं चेति भावः । एतादृशानां तद्वाक्पानं तेषां वचनामृतस्य पानं श्रवणं सादरं मनसा ग्रहणं अन्तर्निवेशनं सुदुर्लभं सुतरां दुष्प्राप्यं, सुदुर्लभत्वोक्त्या तत्सङ्गस्य भगवत्प्रापकत्वमुक्तमिति भावः । अत एव भगवतोक्तं 'सत्सङ्गेनैवे'त्यारभ्य 'सिद्धा मामीयुरञ्जसे'त्यन्तेन, 'अधीते'

इत्यारभ्य 'सत्सङ्गान्मामुपागत' इत्यन्तं च । तद्वाक्यमाहात्म्यमाहुः **तादृशानामिति ।**

**तादृशानां क्वचिद्वाक्यं दूतानामिव वर्णितम् ।**
**अजामिलाकर्णनवद्बिन्दुपानं प्रकीर्तितम् ॥ १८ ॥**

पूर्णभगवद्भक्तानां वचनामृतपानं दुर्लभम्, ते क्वचित् कृपया वाक्यं वदन्ति, तद्वाक्यं दूतानामिव सन्देशहाराणामिव वर्णितं कथितमित्यर्थः । यथा दूतवाक्यं तत्प्रभुवाक्यमेव, तथा तादृशानामपि वाक्यं भगवद्वाक्यमेव । भगवान् उद्दिधीर्षुः स्वीयमुखेन स्वधर्मान् न ज्ञापयतीति भावः । अत एव कपिलदेवेनोक्तं 'सङ्गस्तेष्वथ ते प्रार्थ्य' इति तत्सङ्गस्य भगवति प्रार्थनमुक्तं, न तु स्वकरणत्वं, तद्भगवानेव फलं दास्यन् करोतीत्याशयेनान्यथा न कार्ये इत्येवोक्तम् । तस्मात्तु तादृशानां वाक्यश्रवणं सादरं मनसोपदेशवत् ग्रहणं बिन्दुपानममृतबिन्दुपानं प्रकर्षेण कीर्तितमित्यर्थः । यथामृतपानेनामरत्वं देवत्वं, तथैतत्पानेन नाशाभावपूर्वकभगवत्सेवौपयिकत्वमेवेति भावः । अत एव श्रीभागवते 'परस्परं त्वद्गुणवादसीधुपीयूषनिर्यापितदेहधर्मा' इत्युक्तम् । 'महिमामृतसमुद्रविप्रुष' इति च । अत्रानुभूतनिदर्शनमाहुः **अजामिलाकर्णनवदिति** । यथा विष्णुदूतेभ्यो भगवद्धर्मबलश्रवणेन भगवद्धर्म एव रुचिरभूत्, तदितरेष्वरुचिः, तथैतद्बिन्दुपानकर्तुरपि भवति ॥ १८ ॥

लौकिकाद्यासक्तिरहितबिन्दुपानेन रसास्वादो न भवति, तदर्थमाहुः **रागाज्ञानादिभावानामिति ।**

**रागाज्ञानादिभावानां सर्वथा नाशनं यदा ।**
**तदा लेहनमित्युक्तं स्वानन्दोद्गमकारणम् ॥ १९ ॥**

रागः स्नेहः पुत्रादिषु, अज्ञानं भगवत्स्वरूपस्य, आदिपदेन सर्वविषयाद्यासक्तिः, तद्भावानां यदा नाशनं स्यात्, तदा लेहनमित्युक्तं भवति, रागादिभावानां नाशनं नामादर्शनं सवासनं तत्त्याग इत्यर्थः । तदेव लेहनं रागाद्यभावपूर्वकबिन्दुपानं स्वानन्दस्य भगवदानन्दस्योद्गमार्थं कारणं भवतीति भावः । स्वस्य जीवभावेन तिरोहितानन्दस्योद्गमे प्राकट्ये सम्यक् तत्कारणं भवतीत्यर्थः ॥ १९ ॥

विंशं भावमाहुः **उद्धृतोदकवदिति ।**

**उद्धृतोदकवत्सर्वे पतितोदकवत्तथा ।**
**उक्तातिरिक्तवाक्यानि फलं चापि तथा ततः ॥ २० ॥**

पूर्वोक्ता अमृतोदतुल्यातिरिक्तानां वाक्यानि तथैव तेषां सर्वेषां भावाः भगवद्भाववचनेन गृहीताः । वाक्यानि च तथैवादरेण श्रुतानि उद्धृतोदकवदुपकुर्वन्ति यथा, तथा गृहीतानि प्रासादात् पतितोदकवत् उपकारं कुर्वन्तीत्यर्थः । उद्धृतोदकं यथा स्वस्य स्नानपानदशासु यत्नगृहीतत्वात् यत्किञ्चित्सङ्कोचेन योग्यं भवति, तथैतेषां भावोपीति भावः । तथैतेषां फलमपि भवति । पतितोदकं यथा मलस्नानादियोग्यं, न तु पानादिषु, तथैतेषां

भावोपीत्यर्थः । उद्धृतोदकं यथा पानादिदशायामेव तृषाशान्तिं करोति, स्वोत्पत्तिस्थानसदृशान् गुणान् विदधाति, स्वस्थितिवशाच्च शीतोष्णभावं भजते, सुधा तु सदैकरूपेति सदैकरूपमेव गुणं विदधातीति भावः ॥ २० ॥

उपसंहरन्ति इतीति ।

**इति जीवेन्द्रियगता नानाभावं गता भुवि ।**
**रूपतः फलतश्चैव गुणा विष्णोर्निरूपिताः ॥ २१ ॥**

इतीति समासो प्रकारेण वा । जीवे इन्द्रियेषु गताः प्राप्ताः भुवि नानाभावं सात्त्विकादिभावं गताः प्राप्ताः एतादृशा विष्णोर्भगवतो गुणाः स्वरूपतः फलतश्च निरूपिता विवेचिता इत्यर्थः ॥ २१ ॥

**इति श्रीबालकृष्णकृतजलभेदविवृतिः समाप्ता ॥**

# परिशिष्टम् प्रथमम् ।

**पूर्णा भगवदीया** इत्यत्र । अत्र हि सामान्यत पुष्टिमर्यादामार्गीयोः पूर्णा ये भगवदीयास्त उच्यन्ते । अत एव विवृतौ भक्त्या सेवया च पूर्णा इत्युक्तम् । तत्र मर्यादामार्गीयास्तु भक्त्या माहात्म्यज्ञानसहितस्नेहेन पूर्णाः सर्वदा गुणपरा धर्मद्वारैव धर्मिपराः, पुष्टिमार्गीयास्तु धर्मिमात्रपराः, तेषां परोक्षे गुणपरत्वं धर्मिपरतयैव । तद्विरहे स्वरूपं विना स्थातुमशक्त्या तत्परत्वात् । तत्र पुष्टौ गुणा अपि गीयमाना धर्मिरूपा एव । अत एव 'तव कथामृत'मित्यत्र कथाया अपि गुणरूपाया भगवत्समत्वबोधनाय षड्गुणत्वमुक्तम् । तत् स्वरूपात्मकत्व एव सम्भवति । अन्यथा गुणे गुणानङ्गीकारेण तेषु षड्गुणत्वोक्तिर्विरुद्धा स्यात् । तत्र शेषः पुष्टिमार्गीय एव, अन्तरङ्गलीलासम्बन्धित्वात् । **व्या-सस्तु** मर्यादामार्गीयः, समाधिरूपसाधनेन भगवद्दर्शनवत्त्वात् । 'अपश्यत् पुरुषं पूर्णं'मिति वाक्यात् । अग्निस्तु प्रभुरस्माकं पुष्टिमार्गीय एव, पुष्टिभक्तिरूपमुखारविन्दरूपत्वात् । **मारुतोपि** तथा, मर्यादापुरुषोत्तमेपि पुष्टिमार्गप्रकारेणान्तरङ्गभक्तत्वात् । अत एव श्रीसीतामनःसमाहितये लङ्कायां दूतिकाया इव तस्य प्रेषणम् । **जडो** मर्यादामार्गीयः, पूजापरत्वाद्दुःसङ्गभयत्वात् देहावसानप्रतीक्षकत्वाच्च । **नारदोपि** तथा, सततं गुणपरतया तावन्मात्रेण स्वस्थत्वाच्च । **मैत्रेयोपि** मर्यादामार्गीय एव, भगवत्पारोक्ष्येपि विदुरोपदेशछलेन स्वस्थत्वात् । अन्ययोद्धव इव क्लिष्टेनुभूतान् निजस्वामिगुणानेव स्थातुमशक्ततयानुवदेत् । एवं सति पुष्टिमर्यादामार्गीयत्वाविशेषेण भक्तेषु पूर्णत्वमेवादाय समुद्रत्वमत्रोच्यते, न

---

१ गुणपरत्वात् । २ षड्गुणत्वम् ।

तु विशिष्य । तथा च यथा समुद्राः पूर्णाः, तथैतेपि गुणैर्भगवदीयैर्भावैश्च पूर्णाः । यथा
वा ते चन्द्रदर्शनेन तरलिततरङ्गाः, तथैवैतेपि गुणगानावसरे भावभावनावसरे च भगव-
द्वदनविधुदर्शनेन भावतरङ्गितान्तःकरणा इति तात्पर्याज्ञानादेव पुष्टिमार्गीयाचार्याणां म-
र्यादामार्गीयभक्तपङ्क्तिपाठोनुचित इति मत्सरिकथनं नीरमयनसदृशमेव । अत एवाग्रे 'लो-
कवेदगुणैर्मिश्रभावेने'त्यनेन समुद्रसदृशभक्तेष्वेव षड्विधाः भिन्नाः कृताः, एकविधाः पुष्टि-
मार्गीया गुणातीततया 'शुद्धा' नित्यनेन भिन्नाः कृताः । भगवद्गुणानां षड्विधत्वेन मर्या-
दामार्गीयाणां षड्विधत्वम्, पुष्टिमार्गीयाणां तु धर्मिस्वरूपमात्रपरत्वेनैकविधत्वम् । पूर्वे हि
मिश्रभावाः, तद्भावेषु गुणानां मिश्रणात् । तद्द्वारैव तेषां प्रभौ भाववत्त्वाच्च । उत्तरे तु
शुद्धभावाः केवलस्वरूपेण तन्मात्रपरत्वात् । अत एव तद्गीयमानगुणेष्वपि स्वरूपात्मक-
त्वमभिप्रेत्याग्रे 'गुणातीततया शुद्धान् सच्चिदानन्दरूपिण' इत्यनेन शुद्धत्वमुक्तम् । अत एव
विवृतौ 'पूर्णभगवदीयेष्वत्युत्तमान् निरूपयन्तीति गुणातीततये'त्यस्याभास उक्तः । तदर्थस्तु
पुष्टिमर्यादासाधारण्येनोक्तपूर्णभगवदीयेष्वत्युत्तमान् केवलपुष्टिमार्गीयान् निरूपयन्तीति
ज्ञेयः । अत एव पूर्णत्वेन समुद्रसदृशत्वस्य सर्वेषु सत्त्वेपि तेष्वन्तोदत्तुल्यत्वनिरूपणम् ।
तस्मादेवमभिप्रायमवगत्य नास्मत्पितृचरणविवृतावन्नमत्सरिभिः संशयलेशोपि विधेयः । ननु
तथापि तादृशपंक्तिपाठस्तदीयानां तानेव सर्वोत्तमत्वेन जानतां न मनोरमो भवतीति
चेत्? सत्यम् । नेदं तदीयजनवाक्यं, येन संभावितमप्यन्यत्र तत्साम्यमुच्यमानं न स-
हेयुः, क्व पुनर्वदेयुः, किन्तु निजाचार्यचरणानाम् । ते तु कञ्चिद् धर्ममादाय बहुषु स्व-
लेषु तथा वदन्त्येव, अन्यथा 'अर्थं तस्य विवेचितु'मिति वाक्ये 'मां व्यासव'दिति दृष्टा-
न्तेन व्याससाम्यं कथं वदेयुः । न हि भगवता निजाचार्यवत् पुष्टिपथप्रकटनाय व्यास
आविर्भावितः, किन्तु कीरवत् तन्मुखतः शब्दात्मकं श्रीभागवतमाविर्भावयितुम् । अर्थस्य
भगवद्रूपत्वेन तत्प्रकटनं तु 'स्वयमेवात्मनात्मान'मिति वाक्यरूपेणैव भवतीति तत्प्रकट-
नाय तदात्मकानाचार्यानेव, तत्रापि भागवतार्थो भक्तिरूप इति भक्तिरूपास्यरूपानेवा-
विर्भावितवान् । तथा च शब्दात्मकं श्रीभागवतं व्यासात् प्रकटितम्, अर्थात्मकमेतेभ्यः
प्रकटितमिति तावद्धर्ममादाय यथा तत्र स्वस्मिन् तद्दृष्टान्त उक्तः, एवमत्रापि पूर्णभग-
वदीयत्वमात्रमादाय तन्मध्ये स्वस्यापि गणनेति न दोषः । वस्तुतस्तु पूर्णत्वं भगवदी-
यत्वं चाचार्येषु भिन्नमेव । भगवदीयत्वं तदास्यरूपत्वेन, तत्त्वेन भक्तिरूपत्वं, ऽभौ
रसात्मकत्ववत् । अत एव यथा प्रभौ रसलीलायां तद्धर्माविर्भावो भक्तत्वं च तादृशस्यैव,
तथात्रापि भगवदाज्ञया अवतीर्य जनशिक्षार्थं भजने भक्तिधर्माविर्भावो, भगवत्त्वेपीति
भगवत्त्वभगवदीयत्वे अपि संभवत इति नानुपपत्तिः काचित् । पूर्णत्वमप्यत्र स्वरूपपूर्ण-
त्वमेव । चेतस्तत्प्रवणसेवायां निरोधे पञ्चात्मकस्वरूपेणैव पूर्णत्वात् । अत एव 'रासस्त्री-
भावपूरितविग्रह' इति प्रभोर्नाम । इतरत्र तु गुणैरेव तथात्वमिति विभेदः । पूर्णभगवदी-

यत्वं तु सामान्यतः सममिति तमादाय तथोक्तिरुचितैव । अन्यथैकादशे प्रभुणा स्वामिनीभावनिरूपणे 'यथा समाधौ मुनयोब्धितोय' इति स्वामिनीषु मुनिदृष्टान्तकथनं न सङ्गच्छेत । स्वामिनीभावयोगयोः सुमेरुसर्षपवत्तारतम्यात् । अत एवात्र स्वस्य श्रीभागवतप्रकटकत्वेन तत्समतया व्याससमीप एव निरूपणम् । नैतावताचार्येष्वंशतोपि तत्स्वरूपसाम्यमायाति । कलावतारपुरुषोत्तमयोः साम्यसम्भावनाया अप्यसम्भवात् । अन्यथा भगवति पुरुषोत्तमे पुरुषरूपत्वसंभावनाऽसंभवेन 'पुरुषः शक्तिभिर्यथे'त्यादिना पुरुषदृष्टान्तकथनं बाध्येत । अतो धर्मेणैव केनचित् सर्वत्र समतोक्तिरिति नात्र दोषलेशोपि । अत एव, आनन्दरूपतया सहजनीले भगवति नीलनीरदृष्टान्तोपि युज्यते । किञ्च, 'भङ्गीकृतौ समर्याद' इति सर्वोत्तमे नामनिरूपणेन प्रादुर्भावदशायां मर्यादापरिग्रहात् तत्पूर्णत्वमपि स्वस्मिन् बोधयितुं तत्पंक्तिपाठो निरूपितः । नैतावता न्यूनत्वमायाति । 'अधिकं तत्रानुप्रविष्टं, न तु तद्धानि'रिति न्यायात् । अपरञ्च, यथा शुकेन सर्वावतारगणनायां श्रीकृष्णमपि निरूप्य 'कृष्णस्तु भगवान् स्वय'मिति तत्र विशेष उक्तः, अवतारकार्यकरणात् पुष्टिकार्यकरणाच्च । तथाचार्येष्वपि यज्ञादिमर्यादाकार्यकरणात् सेवादिपुष्टिकार्यकरणाच्चोभयविधकार्यकर्तृत्वमस्तीति बोधयितुं प्रथमतस्तन्मध्ये निरूपणं विधाय पश्चादाचार्याणां 'गुणातीतनये'त्यादिना निरूपणं कृतमित्यस्मत्पितृपदविवृतावन्यथामतयोऽविज्ञातस्वरूपतय एवेति विद्वद्भिराचार्यचरणाश्रयैरवधेयमिति दिक् ।

अभिज्ञविवृतावज्ञाः पूर्वपक्षं प्रकुर्वते । अशक्ता अपि सुज्ञास्तु विश्वसन्ति तदीरिते ॥ १ ॥
शक्तास्तदाश्रयबलादभिप्रायं विदन्ति हि । समादधति ते सर्वमतिमूढजनोदितम् ॥ २ ॥
गुरवः पितृपादा मे कथितेन सुते मयि । दासीभूते प्रसीदन्तु यच्छन्तु विमलां मतिम् ॥३॥

इति श्रीहरिदासविरचितं 'पूर्णा भगवदीया' इत्यस्य संशय-
निराकरणम् ॥

---

# परिशिष्टम् द्वितीयम् ।

अथेदं विचार्यते । श्रीवल्लभैः 'पूर्णा भगवदीया ये शेषव्यासाग्निमारुताः । जडनारदमैत्राद्यास्ते समुद्राः प्रकीर्तिताः' इति जलभेदभावग्रन्थे चतुर्दिशं सामान्यतः चत्वारः समुद्रा इव शेषाद्या उक्ता भगवदीयाः (त्रुटिपत्रम् ।) अत्र समुद्रशब्दो यौगिकोऽपि ग्राह्यः । तथा च मुद्रया सहिताः समुद्राः । मुद्राऽत्र वैदिकतान्त्रिकमिश्रभक्तवैष्णवधर्मप्रवर्तनसम्प्रदायरूपा तप्तशीतलचक्रादिचिह्नधारणरूपापि

---

१ पंक्तिर्गणना वेदा गणनायां पाठो निरूपित । २ व्यूहनार्थम् ।

आद्या । तेऽत्र चत्वारो वैष्णवधर्ममार्गसम्प्रदायिन आचार्याः परिगृहीताः । तत्र शेषः श्रीमन्नारायणोपासनमुख्यकवैदिकधर्मपरायणतप्तमुद्राङ्कितसात्त्विकाचार्यरामानुजरूपः सम्भूत उक्तः । व्यासः श्रीगोपीजनवल्लभोपासनमुख्यकृताग्निकधर्मपरायणशीतलमुद्राङ्कितराजसोपचाराचार्यविष्णुस्वामिस्वरूप उक्तः । अग्निः पुन उत्सन्न एव तत्सम्प्रदाये विलक्षणप्रकारतः सर्ववेदेतिहासपुराणादिसारोद्धारसम्मिश्रितश्रीगोपीजनवल्लभसेवनमुख्यकधर्मपरायणशीतलमुद्राङ्कितनिर्गुणभक्तिमार्गाचार्यश्रीवल्लभरूपः तत्स्थान उक्तः । मारुतो वायुजो हनूमान् महाविष्णुपूजनोपचारमुख्यकवैदिकताग्रिकधर्मपरायणतप्तशीतलोभयविधमुद्राङ्कितराजसतामसोपचाराचार्यमध्वाख्यरूपः संभूत उक्त इति चत्वारो मुख्यसम्प्रदायिन आचार्या उक्ताः ।

अथ तेषां क्रमेणाग्रिमानुपसम्प्रदायिनो निरूपयन्ति **जडनारदमैत्राद्या** इति । जडनारदमैत्राणामाद्या मूलभूता इति । जडो रामानन्दस्वरूपः सन् सर्ववर्णसंकलितो वैष्णवधर्मप्रवर्तकत्वात् शेषरामानुजस्य उपसम्प्रदायीभूतः । नारदस्तु कृष्णचैतन्यमुनिस्वरूपः । तथैव व्यासविष्णुस्वामिवल्लभा(चार्यो)पसम्प्रदायकप्रवर्तकः सनातनमैत्रो मैत्रेयः श्रीरूपाख्यः सम्भूतः । उत्सन्ननिम्बार्कमार्गस्योपसम्प्रदायप्रकाशकश्रीभट्टहरिव्यासमतस्य इति केचित् । वस्तुतस्तु श्रीरूपः सहजीव एव स्वयं मूलभूताचार्यवायुरूपमध्वाख्यस्योपसम्प्रदायी जात उक्तः । एतदुपष्टम्भकं श्रीमदाचार्याणामेव स्वेषां वचनं, यथा श्रीभागवते तृतीयस्कन्धे 'भावोचं भक्तियोगस्य स्वरूपं ते चतुर्विध'मित्यत्र 'भेदः पारमार्थिक' इति शास्त्रं पुरस्कृत्य त्रिविधो भक्तियोग उक्तः । ते च सम्प्रति विष्णुस्वाम्यनुसारिणः तत्त्ववादिनो रामानुजीयाश्चेह तमोरजःसत्त्वैः भिन्नाः (भक्ताः), अस्मत्प्रतिपादितश्च नैर्गुण्यः । एवं चतुर्विधोपि भगवता प्रतिपादितः, 'अभिसन्धाय योऽहिंसां' इत्यादिभिरिति । पद्मपुराणे तु 'श्रीब्रह्मरुद्रसनका वैष्णवाः क्षितिपावनाः । चत्वारस्ते कलौ भाव्याः सम्प्रदायप्रवर्तकाः । श्रीविष्णुस्वामिनिम्बार्कमध्वरामानुजाख्यया । भविष्यन्ति प्रसिद्धास्ते ह्युत्कले पुरुषोत्तमा'दित्युक्तम् । तत्र श्रीसम्प्रदायिकाः शेषरामानुजीयाः, ब्रह्मसम्प्रदायिनो माध्वाः, रुद्रसम्प्रदायिनो व्यासविष्णुस्वामिसम्प्रदायानुवर्तिनः, सनकसम्प्रदायिनो निम्बार्कश्रीभट्टहरिव्यासीयाः साम्प्रतम् । एतदभिप्रेत्यैवमेव सम्प्रदायप्रदीपे ग्रन्थे गदाधरद्विवेदिनावेदितम् । भारतीये वैशम्पायनोक्तसहस्रनामस्तवेपि 'अहःसंवर्तको वह्निरनिलो धरणीधर' इत्यत्र पृथक् पृथगेतदाचार्यचतुष्टयस्वरूपनामैवोक्तम् । तदेतत्सहस्रनामटीकायां श्रीविष्णुवल्लभाख्यायां द्रष्टव्यम् ।

**वियदर्थवसुग्लौभिर्मितेऽब्दे मोदनामनि ।**
**चैत्रे सिते गुरौ द्वैते श्रीशः काश्यामदोऽलिखत् ॥ १ ॥**

१ तामस ?
७ जल०

श्रीकृष्णाय नमः ।

# पञ्चपद्यानि ।

## श्रीहरिरायकृतविवरणसमेतानि ।

एवं जलभेदे पूर्वश्लोकैर्विंशतिधा भिन्ना भक्तास्तद्भावाश्च निरूपिता जलदृष्टान्तेन, तेषामन्यहृदयसार्द्रीकर्तृत्वज्ञापनाय । तेषां च पुनर्भक्तानामष्टादशविधाप्रतिपादितभगवद्गुणानामष्टादशविधत्वेन तन्मात्रपरतया केवलमर्यादामार्गीयाणामष्टादशविधत्वात्, पुष्टिमार्गीयाणां मिश्रशुद्धभेदेन द्विविधत्वात्सगुणनिर्गुणभेदेन दशविधानां मर्यादापुष्टिभेदेन द्विविधत्वाद्वा विंशतिविधत्वम् । तद्भावानामपि तद्वर्तित्वेन तथा संख्यायत्त्वम् । अतः परं तद्वाक्यद्वारा तद्भावग्राहकान् श्रोतॄन् पुष्टिमर्यादाभेदेन द्विविधान्, पुष्टिमार्गीया एकविधा उत्तमा एव, मर्यादामार्गीयास्तु मध्यमाधमोत्तमभेदैस्त्रिविधा इति चतुर्विधांश्च निरूपयितुं प्रथमं मुख्यत्वेन पुष्टिमार्गीयान्निरूपयन्ति ।

> श्रीकृष्णरसविक्षिप्तमानसारतिवर्जिताः ।
> अनिर्वृता लोकवेदे मुख्यास्ते श्रवणोत्सुकाः ॥ १ ॥

श्रीकृष्णः श्रिया परमशोभया लक्ष्म्या वा युतः कृष्णः सदानन्दो निर्दोषनित्यगुणपूर्णो रसिकशिरोमणिस्तस्य यो रसो भजनानन्दरूपः, अथवा स एव रसः स्थायिभावात्मा विरहरूपः, तेन परोक्षे हृदयागतेन विक्षिप्तं स्थानात् प्रचलितं यन्मानसमन्तःकरणं तत्र याऽरतिश्चरितश्रवणविषयिणी तया वर्जिता इत्यर्थः । अयमर्थः । भगवच्चरिताकर्णनविषयिणी अरतिर्द्वेधा निवर्तते, मर्यादापुष्टिमार्गभेदेन । तत्र मर्यादामार्गे 'शुश्रूषोः श्रद्दधानस्ये'ति वाक्यान्महत्सेवापुण्यतीर्थनिषेवणादिभिः रुचिरुदेति, ततोऽरतिर्निवर्तते । पुष्टिमार्गे तु तद्रसस्वसामर्थ्यादेव 'दुस्त्यजस्तत्कथार्थ' इति वाक्यान्निवर्तते । तथा च पूर्वोक्तेषु पुष्टिमार्गीयत्वावगतय एवमुक्तम् । एवं चरित्रश्रवणे तेषामरत्यभावं निरूप्य तन्मात्रविषयकरतिं निरूपयितुं लोकवेदानिर्वृतिमाहुः अनिर्वृता लोकवेद इति । लोकयुक्ते वेदे प्रवृत्तिमार्गीयधर्मबोधके भगवदितरभजनविधायके । अथवा लोके वेदे चानिर्वृता निर्वृतिरहिता अस्वस्था इत्यर्थः । उभयोरपि लोकवेदयोः 'ये त्यक्तलोकधर्माश्चे'ति वाक्यात्त्याज्यत्वेन तुल्यताबोधनाय समस्तं पदम् । अत एव लोकानिर्वृतिबोधनाय 'पतिसुतादिभिरार्तिदैः कि'मित्यादिवाक्यान्युक्तानि । वेदानिर्वृतिबोधनाय 'मग्नमुद्धर गोविन्दे'त्युक्तम् । त्वमेव साक्षादतिदुःखसागरे निमग्नं व्रजमुद्धर, नतूद्धृतेन वेदेन वयमुद्धर्तव्या इत्याशयेन । एवं ये पुष्टिमार्गप्रकारेणारत्यभावरतिभावयुक्तास्ते मुख्याः पुष्टिमार्गीयत्वेन श्रेष्ठाः ।

---

१ विप्रयोगे गुणगानं विना स्थातुमशक्यम् । २ अस्वास्थ्यम् ।

अथवा, मुखं पुष्टिमार्गीया भक्तिस्तत्प्रभवा भक्तिरूपभगवन्मुखारविन्दसंलग्नार्ठकफुल्लेनोच्यमानाः सम्भूय भक्तिमाश्रयेण पुष्टिमार्गमुक्ता जीवा मुख्या इत्यर्थः । ननु पूर्वनिर्वृता लोकवेद इत्यनेन भगवति रतिरुक्ता, न श्रवणादिष्विति तेषु गौण्येव सेति कथं मुख्यश्रोतृत्वमित्याशङ्क्याहुः **श्रवणोत्सुका** इति । भगवति रतावपि वियोगे श्रवण एवोत्सुकाः । औत्सुक्यं तत्रैव । प्रियप्रीत्यापि परोक्षे तत्सन्देशहारके प्रीतौ श्रवणौत्सुक्यस्य सद्भावात् । अत एवोक्तं 'इति स्म सर्वाः परिवव्रुरुत्सुकास्तमुत्तमश्लोकपदाम्बुजाश्रय'मिति । तथा च रसिका रसविक्षिप्तमनसश्चरितसहजभावाः वियोगार्तियुताः प्रियवार्ताश्रवणमात्रैकमतयः पुष्टिमार्गीयाः श्रोतार इति सिद्धम् ॥ १ ॥

एवं पुष्टिमार्गीयान्भक्तान् निरूप्य मर्यादामार्गीयांस्तान्निरूपयितुं तत्रोत्तमा अतिदुर्लभा इति प्रथमं मध्यमान्निरूपयन्ति ।

**विक्लिन्नमनसो ये तु भगवत्स्मृतिविह्वलाः ।**
**अर्थैकनिष्ठास्ते चापि मध्यमाः श्रवणोत्सुकाः ॥ २ ॥**

विशेषेण क्लिन्नं तदेकपरतया कोमलत्वादार्द्रं मनो येषामित्यर्थः । यथार्द्रं वस्तु स्वसम्बद्धमप्यार्द्रयति, तथा येषां मनः स्वसम्बन्धिनामपि रूक्षत्वेन शुष्काणां चेतः सार्द्रं विदधाति, शुकादीनामिव त इत्यर्थः । य इत्यनेन सर्वत्र प्रसिद्धाः मर्यादामार्गीया उक्ताः । तुशब्देन पूर्वोक्ताः पुष्टिमार्गीया व्यावर्तिताः । ननु विक्लिन्नमनस्त्वं पुष्टिमार्गीयेष्वपि तत्प्रीत्या भवतीति तद्व्यावर्तकं धर्ममाहुः **भगवत्स्मृतिविह्वला** इति । श्रवणावसरे या चरित्रसम्बन्धितया भगवतः षड्गुणपूर्णस्य स्मृतिः स्मरणं तेन, न तु स्थायिभावात्मकेन रसेन विह्वलास्तल्लीलाविशिष्टप्रभुदर्शनाय व्याकुला इत्यर्थः । ननु पूर्वोक्तधर्मद्वयेनापातत उत्तमत्वमेव तेषु भासत इति व्यक्ततया मध्यमत्वबोधकं धर्ममाहुः **अर्थैकनिष्ठा** इति । अर्थः पूर्वोक्तधर्मयुग्मेनोत्तमतया भासमाना अपि अर्थः पुरुषार्थो मोक्षादिः, अथवाऽर्थः प्रयोजनं स्वकृतार्थत्वादिः स एवैको मुख्यस्तन्निष्ठाः, न तु मुख्यतया चरित्रनिष्ठाः । फलसापेक्षत्वान्मध्यमा इत्यर्थः । ननु तादृशाः श्रोतार एव न भवन्ति, तत्र तात्पर्याभावादित्याशङ्क्याहुः **श्रवणोत्सुका** इति । तेत्साप्यफलैतात्पर्यवत्त्वेपि श्रवणे भगवच्चरित्रश्रवणे उत्सुका औत्कण्ठ्यवन्त इति तेषां श्रोतृत्वेन मध्यमत्वमित्यर्थः । यथा परीक्षिदादीनाम् । तेषामितरापेक्षया पूर्णवैराग्यवत्त्वेनोत्तमत्वेपि सोपाधिकप्रवृत्तेर्विदुरोद्धवाद्यपेक्षया मध्यमत्वमेव । अत एव 'प्रायोपविष्टो गङ्गाया'मिति वाक्यात्परीक्षितः स्वकृतार्थताहेतुत्वेन गङ्गाद्यपेक्षा । अन्यथान्यत्रैवोपविष्टः स्यात् । भगवच्चरित्रं तु भगवानिव न स्वफलसाधनेन्यदपेक्षत इति स्वार्थनिष्ठत्वमेव तत्र प्रयोजकमिति तत्र तथात्वम् । विदुरस्य तु 'यत्र मित्रासुतो मुनि'रिति वाक्याद्वक्तृसन्निहितस्थलत्वेनैव तत्र गमनं, न गङ्गोद्देशेनेति स्वार्थनिष्ठत्वाभावाच्चरित्रमात्रनिष्ठत्वेनोत्तमत्वमेवेत्यर्थः । मर्यादामार्गीयत्वं तु परीक्षिदि-

१ भक्तिकुलेति पाठ. । २ चरित्र । ३ मोक्षादि । ४ मुख्यधर्मं । ५ तेषु मध्यमत्वम् ।

द्वयोः समानं शुद्धिसापेक्षफलसिद्धेः । अत एव तीर्थाटनसत्सङ्गाभ्यामेव विदुरे श्रवणाधिकारः सिद्धः । परीक्षिति तु स्पष्ट एव । अत एवास्मदाचार्यैरुक्तं 'मर्यादास्थस्तु गङ्गायां श्रीभागवततत्परः' इत्यन्येषामपि तथाविधानां चित्तचाञ्चल्याभावसाधनत्वाभिप्रायेण ॥२॥

एवं मध्यमान्निरूप्याधमानामप्रयोजकत्वेन भिन्नतयाऽनिरूपणीयत्वात्तु तमनिरूपणमध्य एव केनचिद्धर्मेण तान्निरूपयितुमुत्तमानेव प्रथमं निरूपयन्ति ।

निःसन्दिग्धं कृष्णतत्त्वं सर्वभावेन ये विदुः ।
ते त्वावेशात्तु विकला निरोधाद्वा न चान्यथा ॥ ३ ॥

कृष्णस्य सदानन्दस्य तत्त्वं वास्तवं रूपं रसात्मकं तादृशकरपादादियुक्तत्वेन साकारं व्यापकं स्वेच्छया मायापसारणेनाविर्भाववत् निःसन्दिग्धं शास्त्रस्वानुभवाभ्यां सन्देहरहितं तथापि सर्वभावेन 'यावान् यश्चास्मी'ति वाक्याद्रसात्मकः साकार एव सर्वरूप इति भावेन तात्पर्येण विदुर्जानीयुरित्यर्थः । नन्वेवं दृढज्ञाने श्रवणापेक्षाऽभावान्न श्रोतृत्वमुपपद्यत इत्याशङ्क्याहुः ते त्विति । ते पूर्वोक्ता दृढज्ञाना अपि ज्ञानेन हृदये भगवदावेशात् तु विकला ज्ञातृत्वेन स्वस्फूर्तिरहिता इति तदुपपद्यत इत्यर्थः । अत एवोक्तं 'हरेर्गुणाक्षिप्तमतिर्भगवान् बादरायणि'रिति । तुशब्देन रसावेशवन्तो व्यावर्तिताः । तेषां रसावेशस्य सार्वदिकत्वेन कदापि स्वरूपज्ञानानुदयात् । ज्ञानस्य च रसोदयप्रतिबन्धकत्वात् । अत एव सर्वव्यापकस्य स्वान्तःस्थितस्यापि प्रभोरन्वेषणादौ प्रवृत्तिः । (सर्वदा रसावेशवतामन्वेषणादौ प्रवृत्तिः । रसात्मकस्वरूपव्यापकस्वरूपज्ञानोदये सति अन्वेषणादौ प्रवृत्तिर्न स्यात् । गोपिकानां तु सर्वदा रसावेशवत्त्वम् । अतः प्रवृत्तिः ।) तदेवोक्तं सिद्धज्ञानेन श्रीशुकेन 'पप्रच्छुराकाशवदन्तरं बहिर्भूतेषु सन्त'मिति प्रभुविशेषणकथनेन । अत एवोक्तं प्रभुणापि 'न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवे'दिति । ननु भगवदावेशे भगवत इव सर्वज्ञत्वमुचितं, तत्कथमेतेषां वैकल्यं, यतो हेतोर्गुणश्रवणे प्रवृत्तिरित्याशङ्क्य पक्षान्तरमाहुः निरोधाद्वेति । तेषां गुणैरेव निरोधात् । प्रपञ्चविस्मृतिपूर्वकं भगवदासक्तिसम्पादनात् । गुणानामपि स्वातन्त्र्येण निरोधकत्वं श्रूयते 'मद्गुणश्रुतिमात्रेण'त्यादौ । अतो निरोधेन वा वैकल्यमित्यर्थः । नचान्यथेति स्वरूपनिरोधाभ्यां तथेत्यर्थः ॥ ३ ॥

एवं श्रोतृत्वमुपपाद्य कदाचिन्मोक्षाद्यर्थनिष्ठतैतेषामपि भविष्यतीत्याशङ्कयार्थैकनिष्ठत्वप्रयुक्तं मध्यमत्वं वारयन्त आहुः ।

पूर्णभावेन पूर्णार्थाः कदाचिन्न तु सर्वदा ।
अन्यासक्तास्तु ये केचिद्धमाः परिकीर्तिताः ॥ ४ ॥

सर्वत्र पूर्णो यो भगवद्भावो ज्ञानेन भगवदावेशाद् निरोधाद्वा सर्वत्र भगवत्स्फुरणात्तेनैव पूर्णः अर्थः पुरुषार्थो येषामिति, न तेषामन्यः स्वार्थ इति, तन्निष्ठत्वेन मध्यमत्वं न, किन्तु भगवन्मात्रनिष्ठत्वेनोत्तमत्वमित्यर्थः । नन्वेवं पुष्टिमार्गीयेभ्यो न भेद आयाति, तेषामप्येवंविधत्वादित्याशङ्क्याहुः कदाचिन्न तु सर्वदेति । एतेषां भावनावसरे गुण-

गणाकर्णनावसरे या तात्कालिकनिरोधात् तथात्वम् । पुष्टिमार्गीयाणां तु सदैव तथात्व-
मित्यर्थः । अत एव शुकादीनां न सर्वदा लीलेतराननुसन्धानम् । अन्यथा 'मथुराया व्रजं
गता' इति ताटस्थ्येनोक्तिर्नोपपद्येत । पुष्टिमार्गीयभक्तभावस्य तु सार्वदिकत्वं प्रभुरेवाह
एकादशे 'ता नाविद'न्निति पद्ये नीरनिधिनीरप्रविष्टनदीदृष्टान्तेन । नहि महाजलधिजल-
प्रविष्टा नद्यः कदापि पूर्वभावं प्राप्नुवन्ति । स्वरूपेण स्थिता अपि न भेदेन व्यपदिश्यन्ते ।
अतः पुष्टिमार्गीयेषु भगवदितरस्फूर्तिरहितभाववद्भगवदीयत्वं भगवत्त्वं च, भगवता सहौ-
तप्रोतन्यायेनैक्यात् मर्यादामार्गीयेषु श्रवणादिना भगवदीयत्वमेवेति महानेव भेद इत्य-
लमुक्त्या । एवं बहिःसंवेदनाभावदशायां मर्यादामार्गीयोत्तमान्निरूप्य बहिःसंवेदनद-
शापन्नांस्तान्निरूपयितुं बहिःसंवेदनप्रसङ्गेन मध्येऽधमान्निरूपयन्ति अन्यासक्ता इति ।
ये केचित् ब्राह्मणत्वशूद्रत्वादिभिरुत्कर्षापकर्षयुक्ता अप्यन्यद्गृहादिकं तत्रासक्त्या वृत्त्यादि-
सम्पादकत्वेन लोकानामग्रे कथनार्थं भगवद्गुणश्रोतारः 'क्षेत्रप्रविष्ट' इत्यादिनोक्तगुण-
गायकभावग्राहका अधमाः परिकीर्तिता इत्यर्थः । तुशब्देन भगवदर्थैकगृहासक्ता व्याव-
र्तिताः । तस्यास्तु पुष्टिमार्गीयमोक्षरूपत्वेन उत्तमत्वसम्पादकत्वात् ॥ ४ ॥

एवं मध्येऽधमान्निरूप्य पुनर्बहिःसंवेदनदशापन्नानुत्तमान्निरूपयन्ति ।

**अनन्यमनसो मर्त्या उत्तमाः श्रवणादिषु ।**
**देशकालद्रव्यकर्तृमन्त्रकर्मप्रकारतः ॥ ५ ॥**

बहिःसंवेदनदशायामपि न विद्यते अन्यः भगवदतिरिक्तो यत्र एतादृशं मनो
येषामित्यर्थः । ननु को विशेषस्तदान्तःसंवेदन इत्याशङ्क्यानन्यत्वेतस्त्वे प्रकारभेदमाहुः
देशकालेत्यादि । अन्तःसंवेदने हि देशादयो भगवत्त्वेनैव स्फुरन्ति, न देशत्वादिभिः ।
केवलभगवदाकारान्तःकरणे सर्वत्रावरणनाशात्, बहिःसंवेदने त्वन्तःकरणस्य प्रपञ्चप्रवे-
शेन तदाकारत्वे देशत्वादिप्रकारेण तत्स्फूर्तौ तत्र भावनामात्रेण भगवद्बुद्धिरिति विशेष
इत्यर्थः । ननु तदानीं कथं भगवत्त्वेन सर्वस्फूर्तिः, नेदानीम्, अन्तःकरणस्य तस्यैव स्व-
रूपतः सत्त्वादित्याशङ्क्याहुः मर्त्या इति । अन्तःसंवेदने हि ते भगवद्रूपा एव, भाव-
नया तदात्मकत्वात्, अतो न तेषामन्यस्फूर्तिस्तदा, बहिःसंवेदने तु मर्त्यत्वादितरस्फूर्ति-
रिति तत्र देशादिषु शास्त्रेणाहार्या भगवद्बुद्धिरित्यर्थः । एतादृशा मर्यादामार्गे श्रवणादिषु,
आदिपदेन कीर्तनप्रभृतिषु चोत्तमा इत्यर्थः ॥ ५ ॥

भाववतस्तद्भावान् निरूप्य पूर्वं ततो भक्ताः ।
मार्गद्वयेन चोक्ताः श्रोतारः श्रीमदाचार्यैः ॥ १ ॥
आचार्या निजकरुणामात्राः कुर्वन्तु सन्तुष्टाः ।
नाम्ना मां हरिदासं रूपेणापि स्वतः प्रभवः ॥ २ ॥

**इति श्रीहरिदासीयं श्रोतृचातुर्विध्यकथने निजाचार्यश्लोकपञ्चक-**
**विवरणं संपूर्णम् ॥**

श्रीकृष्णाय नमः ।

# पञ्चपद्यानि ।

## श्रीपुरुषोत्तमकृतविवरणसमेतानि ।

अथ श्रीमदाचार्यचरणाः भक्तिवर्धिन्या बीजभावदार्ढ्योत्तरं भक्तिवृद्ध्यर्थं श्रवणकीर्तने साधनत्वेनोक्तवन्तः, बीजदार्ढ्यार्थं च पूजां श्रवणादीनि च नत्रापि साधनत्वेनोक्तवन्तः । तत्र, श्रवणं नाम भगवद्वाचकपदवाक्यानां शक्तितात्पर्यनिर्धारः । कीर्तनं च तन्निर्धारपूर्वकं मुखादुच्चारणम् । एवं तयोः स्वरूपस्य साधारणत्वे त्यागानन्तरं क्रियमाणयोः कुतो भक्तिहेतुत्वम्, ततः पूर्वं क्रियमाणयोश्च कुतो बीजदार्ढ्यमात्र एवोपकारकत्वमित्याकांक्षायां निरोधलक्षणे 'महतां कृपया यावत्' 'महतां कृपया यद्व'दिति श्लोकाभ्यां यथा कीर्तने विशेष उक्तः, महत्कृपाभिव्यक्तभगवत्कीर्तनस्यानन्दसन्दोहजनकत्वमिति प्रथमाधिकारे महतां कृपया यथा भगवदीयकृतं कीर्तनं सुखदं, तथा लौकिकसम्बन्धकीर्तनं न सुखदं, किन्त्वरुचिविषय इति, तत उत्कृष्टाधिकारे विशेषः कीर्तनस्याधिकार्यनुभवभेदविचारणोक्तः । तथा श्रवणस्य कुत्रापि नोक्त इति तदर्थं पद्यश्लोकान् **श्रीकृष्णरसविक्षिप्ते**त्यादिकान् **हरेर्भक्ता** इति निगमनान्तान्वदन्ति । प्रथममुत्कृष्टं भक्तिवृद्धिजनकं त्यागिनां भावमाहुः **श्रीकृष्णे**त्यादि । किञ्च, ननु यथा स्वस्मिन्भगवद्भावं सम्भवरूपं श्रवणफलसिद्ध्यर्थं श्रवणस्योत्कर्षार्थं च वक्तृभावान् परीक्ष्य तत्सङ्गः श्रवणार्थं विधेय इति जलभेदे प्रतिपादितम्, तथा वक्त्रापि भगवद्भावसम्भवरूपकीर्तनफलसिद्ध्यर्थं श्रोतृभावः परीक्षणीयः, तृतीयस्कन्धे विदुरमैत्रेयसंवादे विदुरमैत्रेयज्ञानसंक्रमस्य च परस्परसंवादेन प्रतिपादितत्वात् । अतः कीर्तनसिद्ध्यर्थं श्रोतॄन् विचारयन्ति **श्रीकृष्णे**त्यादि ।

**श्रीकृष्णरसविक्षिप्तमानसा रतिवर्जिताः ।**
**अनिर्वृता लोकवेदे ते मुख्याः श्रवणोत्सुकाः ॥ १ ॥**

अत्र **अनिर्वृता लोकवेद** इति विशेषणं त्यागवत्त्वबोधकम् । तादृशमेव हि लोके वेदे चानिर्वृतेः । **रतिवर्जिता** इति विशेषणं तु रतौ रमणं बहिर्भगवत्प्राकट्येन भगवता सह संलापादिकं, तद्रहिता इत्यर्थकम् । एतेन निरोधलक्षणे 'क्लिश्यमानान् जनान् दृष्ट्वे'ति श्लोकद्वयेन यादृशोऽधिकार उक्तस्तद्राहित्यं सूचितम् । तेन ततः पूर्वं यो गुणगानाधिकारः, यश्चोत्कृष्टः कीर्तनाधिकारस्तदुभयं क्रोडीकृतम् । तदत्र आहुः **श्रीकृष्णरसविक्षिप्तमानसाः श्रवणोत्सुका** इति पदद्वयेन । तथाच श्रीकृष्णस्य भगवतो यो रसो लीलासम्बन्धिभजनानन्दात्मकः, तेन विक्षिप्तं मानसं येषां ते तथा, एतेन तेषां स्वार्थाननुसन्धानं सूचितम् । एते पुष्टिमार्गीया उक्तधर्मेणावगन्तव्याः । किञ्च, श्रवणे

उत्सुका उत्कण्ठायुक्तास्ते भक्ता मुख्याः श्रवणाधिकारिणः । अथ यत्तदोर्नित्यसम्बन्ध इत्यध्याहारः । एतेन ये कीर्तने द्वितीयाधिकारिणो ये च गुणगाने प्रथमाधिकारिणस्ते तुल्या इत्युक्तम् । कीर्तनगानयोर्ज्ञानपूर्वकत्वात्तस्य च श्रवणपूर्वकत्वादि दृश्यते, श्रवणे तादृशत्वस्यैव सिद्धेरिति । नन्वेकादशस्कन्धे 'अथ भागवतं ब्रूत यद्धर्मो यादृशो नृणाम्' यथाचरति यद्ब्रूते यैर्लिङ्गैर्भगवत्प्रिय' इति जनकप्रश्ने हरिणा योगीश्वरेण 'सर्वभूतेषु यः प-श्येद्भगवद्भावमात्मन' इत्यादिभिरेकादशभिः श्लोकैः कर्मज्ञानभक्तिमिश्रा भागवता उक्ताः, सुबोधिन्यां व्याख्याताश्चेति त एवात्र कुतो नोक्ता इति चेत्? उच्यते । तथाहि, प्रश्ने नृणामिति पदात्साधारणा एव भागवताः पृष्टाः, नत्वात्यन्तिका इत्यतस्तदनुक्तिः । किञ्च, तत्र तेषां फललक्षणे 'विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः, प्रण-यरशनया धृताङ्घ्रिपद्मः स भवति भागवतप्रधान उक्त' इत्यनेन भगवतः सर्वदा तद्धृदय-स्थितिर्भागवतप्रधानलक्षणत्वेनोक्ता । सा च स्वभावगम्यत्वेन तत्र स्फुटति, नत्वन्यगम्य-त्वेनेत्यन्यगम्यं लक्षणं तत्सङ्ग्रहार्थं वक्तव्यम्, तदत्रोच्यत एवेति पुष्टिमार्गे यादृशा विवक्षिताः तेऽत्र लक्ष्यन्त इति तदनुक्तिरिति जानीहि । तत्र प्रथमविशेषणद्वयेन यद्धर्मत्वं, तृतीयेन यादृशत्वं, तुरीयेण यथाचरतीत्यर्थोऽपि सिध्यतीत्यपि बोध्यम् । 'तथा न कामकर्मबीजा-ना'मिति श्लोकोक्तलक्षणवत्त्वमपि सिध्यतीति च बोध्यम् ॥ १ ॥

एवं शुद्धपुष्टिमार्गीयान् मुख्यान् श्रवणाधिकारिणो निरूप्य पुष्टिमर्यादामार्गीयान् मध्यमानाहुः **विक्लिन्नेत्यादि** ।

**विक्लिन्नमनसो ये तु भगवत्स्मृतिविह्वलाः ।**
**अर्थैकनिष्ठास्ते चापि मध्यमाः श्रवणोत्सुकाः ॥ २ ॥**

तु पुनर्ये भगवतः स्मृत्या स्मरणेन विह्वला विवशतां प्राप्ताः, च पुनर्ये श्रवणोत्सुकाः श्रव-णोत्कण्ठायुक्तास्ते त्रिविधा अपि अर्थैकनिष्ठाः अर्थः प्रयोजनं स्वकृतार्थतारूपं भक्तिपी-जदार्ढ्यरूपं वा, तत्र एका मुख्या निष्ठा नितरां स्थितिर्येषां तादृशाः सन्तः मध्यमा भक्ताः । एवं च ये गृहस्थाः आसक्त्यव्यसनस्थ वा साधनपरास्ते पूर्वोक्तधर्मवत्त्वेपि साधन-परत्वात्तेषां भगवन्निष्ठायास्तादृशसाधन एवोपयोगात्पूर्वोक्तधर्मवत्त्वेपि मध्यमा एवेत्यर्थः । अत्रापि प्रथमविशेषणेन यद्धर्मत्वं द्वितीयेन च यादृशत्वं बोधितम् । तेनैवाचरणोक्ती अपि सूचितप्राये बोध्ये ॥ २ ॥

विशेषेण क्लिन्नं तदेकपरतया कोमलत्वाद्भगवद्रसेनार्द्रं मनो येषां ते तथा ।

एवं पुष्टिमर्यादामार्गीयान्मध्यमानुक्त्वा मर्यादापुष्टिमार्गीयान् जघन्यानाहुः **निः-सन्दिग्धमिति** द्वाभ्याम् ।

**निःसन्दिग्धं कृष्णतत्त्वं सर्वभावेन ये विदुः ।**
**ते त्वावेशात्तु विकला निरोधाद्वा न चान्यथा ॥ ३ ॥**

पूर्णभावेन पूर्णार्थाः फलाधिक्ये तु सर्वदा ।
अन्यासक्तास्तु ये केचिदधमाः परिकीर्तिताः ॥ ४ ॥

कृष्णतत्त्वं भगवतः सर्वकर्तृत्वं षड्गुणवत्त्वं परमकृपालुत्वं दीनबन्धुत्वं भक्तिज्ञानादिजनकत्वं पतितपावनादिकत्वमनारोपितं निःसन्दिग्धं यथा स्यात्तथा सर्वभावेन भगवत्त्वसर्वत्वेन ये विदुः जानन्ति, ते पुनरावेशाद्भगवदावेशात्तिरोधाद्वा ये विकला, ये पुनरन्यथा न। किञ्च, पूर्णभावेनेति श्लोकोक्तकालपरिच्छिन्नधर्मवन्तस्ते ज्ञानप्रधानत्वादन्यावेशेन भक्त्युत्कर्षरहितत्वाच्च जघन्या इत्यर्थः। तेन तादृशां तादृशां सङ्गे यद्यपि तादृशतादृशभावस्य सिद्धिरिति यथासम्भवमुत्कृष्टसङ्ग एव प्रयतनीयमिति बोध्यम् ॥ ३ ॥ ४ ॥

ननु भवत्वेवं तथापीदानीं जघन्यानामपि दुर्मिलत्वात्कीर्तनमुच्छिन्नप्रायं भवेदिति तदभावार्थं सामान्यतः श्रवणादिभक्त्यधिकारिण आहुः अनन्यमनस इत्यादि।

अनन्यमनसो मर्त्या उत्तमाः श्रवणादिषु।
देशकालद्रव्यकर्तृमन्त्रकर्मप्रकारतः ॥ ५ ॥

प्रकारत इति ल्यब्लोपे पञ्चमी। तथा च देशादीन् प्रकारान् प्राप्य ये भगवदेकमनसस्ते श्रवणादिषु भक्तिषु सङ्गार्थं मृग्याः, यदि पूर्वोक्ता न मिलन्ति। मिलने तु नैतादृशेषु सङ्गनीयमिति न काचिदनुपपत्तिरित्यर्थः ॥

इति श्रीमद्वल्लभनन्दनचरणैकतानश्रीपीताम्बरतनुजश्रीपुरुषोत्तमविरचितं श्रीकृष्णरसविक्षिप्तेत्यादिश्लोकपञ्चकस्य विवरणं संपूर्णम् ॥

श्रीमद्-वल्लभाचार्य-महाप्रभु-विरचित-षोडश-ग्रन्थान्तर्गतः—चतुर्दशः

# संन्यासनिर्णयः

अष्टटीकाभिः समलंकृत।

| | |
|---|---|
| १. श्रीगोकुलनाथानाम् | ५. श्रीगोपेश्वराणाम् |
| २. श्रीरघुनाथानाम् | ६. श्रीपुरुषोत्तमानाम् |
| ३. श्रीगोकुलोत्सवानाम् | ७ काका श्रीवल्लभानाम् |
| ४. चाचा श्रीगोपेश्वराणाम् | ८. बावा श्रीगोपेशानाम् |


श्रीमद्-वल्लभाचार्य-महाप्रभु-वंशावतंस-नित्य- लीला-स्थित-
गोस्वामिश्री-१००८- श्रीद्वारकेश्वरलाल-महाराजश्री-
स्यैतेषां-स्मृतौ-तदात्मजैः- गोस्वामिश्री-१००८
श्री किशोरचन्द्र-महाराजैः
प्रकाशित:

वि. सं. २०३७ श्रीवल्लभाब्दा : ५०३

प्रकाशक :
गोस्वामिश्री १००८ श्रीकिशोरचन्द्रजी महाराज
मोटी हवेली, माडवी, कच्छ, ३७०४६५ भारत.

साधारण संस्करण २००० प्रति
राज संस्करण १००० प्रति
श्रीवल्लभाब्द ५०३

ग्रन्थ-परिचय लेखक : गोस्वामी श्याम मनोहर

मुद्रक :
स्टुडिओ नहार, २३—ए, सेन्ट्रल चौपाटी बिल्डिंग चौपाटी, बम्बई—४०० ००७

॥ श्रीकृष्णाय नमः ॥

॥ श्रीमदाचार्यचरणकमलेभ्यो नमः ॥

# ग्रंथ-परिचय

संन्यासनिर्णयकी रचना वि. सं. १५५१ मे बदरिकाश्रमकी यात्राके अवसरपर नरहरि सन्यासीके लिए की गई ऐसी एक किवदन्ती मिलती है[1]

श्रीरघुनाथजी-विरचित श्रीवल्लभ-दिग्विजयके अनुसार श्रीमहाप्रभुने बदरिकाश्रमकी यात्रा तीन बार की थी. द्वितीय यात्रामें कृष्णदास मेघनके आपके साथ होनेका उल्लेख तथा व्यासाश्रम पधारनेका उल्लेख भी मिलता है इस प्रसगकी सूचना वहाके तीर्थपुरोहित-को दिये गये वृत्तिपत्रमे भी मिलती है. इस वृत्तिपत्रम यात्राकाल "देवाम्भपतिमू (१४३३) मिते" तदनुसार वि. स. १५६८उल्लिखित है. अतः यदि वि. स. १५५१ वाली किवदन्ती प्रामाणिक हो तो उसे प्रथम यात्राका काल मानना पड़ेगा
इसकी पुष्टि चौरासी वैष्णवन्‌की वार्तासे भी होती है[.]

"सो एक समय नरहर सन्यासी बद्रिकाश्रम फिरते-फिरते आये. तहा श्रीआचार्यजी महाप्रभु पधारे सो नरहर सन्यासीको दरसन भये तब नरहर सन्यासी श्रीआचार्यजी महाप्रभुनसो बिनती किये- 'महाराज मे पहिले सन्यास ग्रहण कियो हतो. पाछे आपकी कृपाते भक्तिमारगमे आयो सो सन्यासके प्रकार हैं सो तो मैं जानत हो और भक्तिमारगको कहा प्रकार है सो मैं जानत नाहि. सो मोको कृपा करि कहिये' तब श्रीआचार्यजी कहे— 'तोसो भक्तिमारगके सन्यासको प्रकार कहत हो , तब श्रीआचार्यजी 'सन्यास निर्णय' ग्रन्थ करि नरहर सन्यासीको पढाय भाव कहि सुनायो तब नरहर सन्यासीके हृदयमें पुष्टिमारगको सिद्धान्त स्थिर भयो, तब श्रीठाकुरजीको लीलाको अनुभव भयो सो मग्न होय गये. पाछे श्रीआचार्यजी आगे पधारे नरहर सन्यासी स्वरूपानन्दमे मग्न होय फिरिबो करते"

श्रीमहाप्रभुके चरित्रवर्णनोंमे सर्वाधिक प्राचीन (वि. स १६१० मे) गदाधर द्विवेदी लिखित *सम्प्रदाय-प्रदीपमें भी एक 'सन्यासनिर्णय' का उल्लेख मिलता है* ". *श्रीवल्लभा निर्गत्य गगातीरे उपविष्टा तत्र त्रिदण्डविधिना सन्यासनिर्णय उक्त यथा विष्णुस्वामी तथा यतिर्भूत्वा काश्या गता* " (चतुर्थ प्रकरण) किन्तु यहा 'सन्यासनिर्णय' ग्रन्थवाचक है अथवा ग्रन्थरूपेण निबद्ध न किये गये किसी मौखिक उपदेशका वाचक है, यह निश्चित नही हो पाता है इसके अलावा-'त्रिदण्डविधिना' पदपर भी ध्यान देना चाहिये क्योकि षोडश-ग्रन्थान्तर्गत प्रस्तुत सन्यासनिर्णय ग्रन्थमे कही भी त्रिदण्डविधिसे सन्यास ग्रहण करने या न करने का कोई भी विचार उपलब्ध नही होता है

---

१ वैष्णववाणी (अंक ४ वर्ष १९७९) मे श्रीनागरदास शास्त्रीद्वारा लिखित लेख

षष्ठात्मज श्रीयदुनाथजी-विरचित श्रीवल्लभदिग्विजयमें, काशीमें आसुरव्यामोह-लीला करनेसे पूर्व दामोदरदास प्रभृति वैष्णवोंद्वारा सन्यासकी अभ्यर्थना करनेपर उनके लिए सन्यासकी अनावश्यकता दिखलानेके लिए एक मौखिक उपदेशका वर्णन मिलता है उस सन्यासनिर्णयके उपदेशसारको भी वहां सकलित किया गया है, जिसे ध्यानसे पढनेपर यह स्पष्ट हो जाता है कि प्रस्तुत षोडशग्रन्थान्तर्गत सन्यासनिर्णय और उक्त सन्यासनिर्णय मे उपदिष्ट विषय भिन्न-भिन्न हैं.

कुल मिलाकर दो सम्भावना सामने आती है :

१) बदरिकाश्रमकी प्रथम यात्रा—सभवत वि स. १५५१—में नरहरि सन्यासीके लिए प्रस्तुत षोडशग्रन्थान्तर्गत सन्यासनिर्णय लिखा गया था

२) लोकगोचर देहदेशत्याग अर्थात् आसुरव्यामोह-लीला करनेकी तृतीय भगवदाज्ञाके पश्चात् अन्त करणप्रबोध ग्रन्थकी रचना जैसे श्रीमहाप्रभुने स्वयम् के लिए की, वैसे ही सन्यास लेनेमे पूर्व इस सन्यासनिर्णय ग्रन्थकी रचना भी आपने स्वयम्‌के लिए ही की है. अर्थात् वि. स १५८७ मे .

इनमे प्रथमका समर्थन तो पूर्वोक्त चरित्रग्रन्थोकी एकवाक्यतासे स्पष्ट होता ही है. द्वितीय सम्भावनाका भी समर्थन हमें श्रीपुरुषोत्तमजीकी प्रस्तुत सन्यासनिर्णय ग्रन्थकी व्याख्यामें मिलता है श्रीपुरुषोत्तमजीके अनुसार क्योंकि प्रस्तुत सन्यासनिर्णय ग्रन्थका प्रणयन तृतीय भगवदाज्ञाके बाद हुए पश्चात्तापको दूर करनेके लिए ही हुआ है अतः वि स १५८७ रचनाकाल ही श्रीपुरुषोत्तमजीको मान्यतया सिद्ध होता है

श्रीपुरुषोत्तमजीके अनुसार इसका आधार वे स्वयम् इन शब्दोंमे देते हैं— "यथा तु तेषा परस्परविसम्मतिमवलोक्य अन्त.करणप्रबोधग्रन्थस्य 'पश्चात्ताप'—'परित्याग' पदयो अत्र प्रत्यभिज्ञानात् स एव पश्चात्तापो अत्र निवर्त्यत्वेनादृत ". परन्तु केवल दो समान पद 'पश्चात्ताप' तथा 'परित्याग' के पुनरावर्तनको[1] परम्पराप्राप्त इतिवृत्तसे बलवत्तर नहीं माना जा सकता है इसके अलावा सर्वोत्तमस्तोत्रमे— "विरहानुभवैकार्थ-सर्वत्यागोपदेशक" नामके द्वारा श्रीप्रभुचरण भी प्रस्तुत सन्यासनिर्णय ग्रन्थके—"विरहानुभवार्थं तु परित्याग प्रशस्यते" उपदेशका ही परामर्श करतेसे प्रतीत होते हैं वहा— "विरहानुभवैकार्थसर्वत्यागप्रशसक" अथवा "विरहानुभवैकार्थसर्वत्यागपरायण" न कहकर "उपदेशक" कहना इस बातका द्योतक लगता है कि प्रस्तुत सन्यासनिर्णय ग्रन्थ श्रीमहाप्रभुने अन्त करणप्रबोधकी तरह स्वयम्‌के लिए नही किन्तु अपने अनुयाईओके लिए उपदेशके रूपमे प्रकट किया है

इसके अलावा श्रीपुरुषोत्तमजी भाष्यप्रकाश (३।४।४२) मे— "बहिस्तूभयथापि स्मृतेराचाराच्च' के भाष्याशकी तथा प्रस्तुत सन्यासनिर्णय ग्रन्थकी एकवाक्यता स्वीकारते

---

(१) आज्ञा पूर्वं तु या जाता गङ्गासागरसङ्गमे । यापि पश्चान्मधुवने न कृत तद् द्वय मया ॥
देहदेशपरित्यागस्तृतीयो लोकगोचर । पश्चात्ताप कथ तत्र सेवकोऽह न चान्यथा ॥
(अन्त करण ५-७)

है—"एतस्य प्रारम्भ संन्यासनिर्णयग्रन्थादवगन्तव्यः". यहां प्रारम्भमें भक्तिमार्गके मध्यम कक्षाके अधिकारीके लिए आवश्यक साधनत्यागका विचार इस अधिकरणका प्रमुख उद्देश्य है ऐसा दिखलाते हैं—"अथ भक्तिमार्गीयमध्यमजघन्ययो. फलविचारोत्तर मध्यमस्य त्यागरूपं साधनं चिन्त्यते." भागवतके एकादश स्कन्धके अठारहवें अध्यायमें—"यदा कर्मविपाकेषु लोकेषु निरयात्मसु विरागो जायते सम्यङ् न्यस्ताग्नि प्रव्रजेत्ततः" कारिकासे प्रारम्भ कर सोलह कारिकाओंमें पहले भगवान्‌ने उद्धवको त्रिदण्ड सन्यासका स्वरूप समझाया है, और इसके बाद—"ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वानपेक्षकः सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचर." कारिकामें चतुर्थ आश्रमरूप सन्याससे भिन्न एक सन्यासकी आज्ञा दी गई है; यह सन्यासकी आज्ञा पूर्वोक्त भाष्य (३।४।४२) तथा सन्यासनिर्णय ग्रन्थ का आधारभूत वाक्य है. उद्धवने भी इस सन्यासकी आज्ञाके बाद सर्व-परित्याग किया था तथा यह परित्याग मध्यमाधिकाररूप था, यह त्रिविधनामावलीके—"उद्धवादिमध्यमभावबोधकाय नमः"से स्पष्ट होता है ऐसा श्रीपुरुषोत्तमजी स्वीकारते हैं

ऐसी स्थितिमें सन्यासनिर्णय ग्रन्थ श्रीमहाप्रभुने स्वयम्‌के लिए लिखा यह कहना कुछ असमञ्जस सा लगता है क्योंकि सर्वप्रथम तो सन्यासनिर्णय ग्रन्थमें मध्यमाधिकारीके त्यागके प्रकारको प्रतिपाद्य विषय माना गया है, और स्वयं ही श्रीमहाप्रभु स्वयम्‌के बारेमें मध्यमाधिकारिताका निर्णय लें यह सगत नहीं लगता. श्रीपुरुषोत्तमजीके अनुसार तृतीय भगवदाज्ञा भी "लोकपरित्यागविषयिणी" थी. इस आज्ञाका तात्पर्य मध्यमाधिकारवाले सन्यासग्रहणार्थ लेनेमें कोई विशेष हेतु दृष्टिगत नहीं होता है "स्वीयबन्धनिवृत्त्यर्थं वेश सोपि न चान्यथा" में सन्यासचिह्नोंकी अनियतता या उपेक्षा का जो बोध होता है, वह भी श्रीमहाप्रभुके सर्वथा आग्रहपूर्वक यथाक्रम कुटिचक बहूदक हस तथा परमहस के क्रमनिर्वाहमें उतना सगत नहीं होता.

इन बातोंको दृष्टिगत रखनेसे ऐसा प्रतीत होता है कि लोकगोचर देहदेशत्यागकी तृतीय भगवदाज्ञाके परिपालनार्थ श्रीमहाप्रभुने संन्यासनिर्णय ग्रन्थमें वर्णित मध्यमाधिकारवाला सन्यास नहीं किन्तु चतुर्थाश्रमरूप नित्यसन्यास ही आपने लिया था " . आश्रमचतुष्टयपक्षे नित्यसन्यासी भवति तत्र ब्राह्मण्यं, वय पूर्वाश्रमानन्तर्यं च प्रयोजक न ज्ञानादि" (सुबो ३।१२।४२). सन्यासनिर्णयमें "कर्ममार्गे न कर्तव्य सुतरां कलिकालत " वचन द्वारा जिस चतुर्थाश्रमरूप सन्यासकी भक्तिमार्गीय जीवोंके लिए अनुपादेयता, तथा सर्वनिर्णयमें—"त्रिदण्ड परिगृह्णीत सर्वशास्त्राविरोधि तत् . प्रतिपत्तिरिय सर्वा देहस्य" वचन द्वारा जिस चतुर्थाश्रमरूप शास्त्रविहित सन्यासकी ब्राह्मणदेहके लिए आवश्यकता शास्त्रसम्मत मानी गई है, वही सन्यासका प्रकार श्रीमहाप्रभुने स्वीकारा था

पुष्टिमार्गमें फलानुभूति इस भूतलपर ही उत्तम मानी गई है—"भगवानेव हि फल स यथाविर्भवेद् भुवि" (पु प्र म.). आगे चलकर सेवाफलमें भी वर्णित उत्तम फल 'अलौकिक सामर्थ्य' सर्वेन्द्रियोंसे भगवान्‌की रसात्मिका अनुभूति इसी भूतलपर स्वीकारी गई है. पर प्रभु जब आचार्यचरणको लोकगोचर देह-देश-त्यागकी आज्ञा प्रदान कर रहे थे, मर्यादामार्गीय

कर देना उचित होता है—"विरहानुभवार्थं तु परित्याग प्रशस्यते "

बीजभावके दृढ होनेपर भक्तको यह स्वतएव समझमे आने लगता है कि—गृहस्थितेः उत्कृष्टत्व न भगवदीयत्वमात्रेण किन्तु भगवता सह स्थितया भगवत्कार्यार्थं वा अन्यथा न स्यातव्यम्" (सुबो ३।१।२)

पुनश्च यहां यह अवधेय हो जाता है कि श्रीमहाप्रभुके समक्ष न तो भक्तिके बीजभावको दृढ करनेकी कोई समस्या थी और न स्वगृहमे भगवत्सेवाके अनिर्वाहकी ही, न सतत गृहस्थितिसे भक्तिके बीजभावके विनाशकी ही और न विरहानुभवार्थं परित्यागकी भी क्योकी सन्यासमे मुक्तिसे अधिक अव्ययता तो सम्भव नही, जबकि मुक्तिके बारेमे आपका स्पष्ट अभिप्राय है कि— "स्वतन्त्रभक्तानां तु गोपिकादितुल्यानां सर्वेन्द्रियैस्तथान्त करणैं स्वरूपेण चानन्दानुभव अतो भक्तानां जीवन्मुक्त्यपेक्षया भगवद्दासहितगृहाश्रम एव विशिष्यते" (शास्त्रार्थप्रकरण) इसी तरह सर्वोत्तममे आपको— "रासलीलैकतात्पर्य" कहा गया होनेसे विरहानुभवार्थ भी सन्यासमे आपका प्रवृत्त होना बहुत अर्थपूर्ण नही रह जाता स्वगृहमे भगवत्सेवा-कथामय जीवनयापन उत्तमाधिकारका द्योतक है तथा वह सम्भव न होनेपर भगवद्विरहानुभवार्थ सन्यासग्रहण करना भक्तिमार्गीय मध्यमाधिकारका द्योतक है

यद्यपि "कृत्स्नभावात् गृहिणोपसहार" (ब्रह्मसूत्र ३।४।४७) के भाष्यके उपसहारमें, "कुछ दुर्लभ प्रकार के— राजा आसकरणदास जैसे— भक्त भगवत्सेवा करते हुए भी गृहत्याग कर देते हैं" ऐसा उल्लेख मिलता है परन्तु उस गृहत्यागके जो कारण वहा दिखलाये गये हैं, वे यो हैं— "केचन भक्ता भावनादिलीलादर्शन विना स्थातुमशक्ता प्रचुरमार्यविरहाशया गृहास्त्यक्त्वा वन गच्छन्ति" स्पष्ट है यह बात श्रीमहाप्रभुपर लागू नही होती अतएव भाष्यकार यही कहते है— "तेन भगवद्भजन एव तत्रापि पुष्टिमार्ग एव श्रुतेर्भर इति भावते" अत जिन्हे भगवत्सेवाका सौभाग्य नही प्राप्त होता उनके लिए विरहानुभवार्थं सन्यासका कल्प है इससे यह सुदृढ होता है कि श्रीमहाप्रभुके सन्यासके स्वरूप एवम् प्रयोजन इस सन्यासनिर्णयमें निरूपित भक्तिमार्गीय मध्यमाधिकारक द्योतक सन्यासके स्वरूप एवम् प्रयोजन से भिन्न हो य

अतएव दामोदरदास प्रभृति वैष्णवोकी सन्यासमे भी आपके अनुवर्तनकी प्रार्थनाको श्रीमहाप्रभुने अस्वीकार कर दिया था, श्रीयदुनाथजीके शब्दोमे, 'ततो दामोदरादीना सहयानाय सन्यासग्रहणार्थं प्रार्थना जाता तथाचार्यै युष्माक भागवतसन्यासोऽस्त्येव मत्कार्यार्थम् उद्धवादिवदिहैव स्थातव्यमित्युक्त्वा सन्यासनिर्णय श्रावित 'भागवत सन्यास से आपका तात्पर्य ब्रह्मसम्बन्धमन्त्रद्वारा आत्मनिवेदनके बारेमे ही प्रतीत होता है स्वयम् श्रीमहाप्रभुके त्रिदण्डविधिसे सन्यासग्रहणका प्रयोजन भगवदाज्ञाका पालन ही था अत वैसी आज्ञाके अभावमें अन्य अनुयायिओके लिए सन्यासमे आपका अनुवर्तन सर्वथा अनावश्यक था

नरहरि तो पहले ही सन्यास ले चुके थे और एक आश्रमसे दूसरे आश्रममे एक बार पहुचनेके बाद पुनरावर्तन सर्वथा शास्त्रनिषिद्ध है, अतएव वृन्दावनमे पहले नरहरिको त्रिदण्ड-

विधिसे अर्थात् शास्त्रसम्मत रीतिसे संन्यास लिवाया गया और बादमें बदरिकाश्रममें उन्हे इस संन्यासनिर्णय ग्रन्थके उपदेश द्वारा भगवद्विरहानुभवमे दीक्षित किया गया !

संन्यासका विधान पुत्रैषणा वित्तैषणा और लोकैषणा से ऊपर उठनेवालोके लिए शास्त्रमें मिलता है. परन्तु शिष्यैषणामें ये तीनो वासनायें छद्म रूपसे त्रिगुणित हो जाती हैं. पुत्र तो दोचार पैदा हो जायें तो लालसा सन्तुष्ट हो जाती है, परन्तु शिष्यैषणा तो दो-चार हजार चेलोके जुट जानेपर भी सन्तोषका नाम नही लेती ! अतएव अपने सहज परिवारके पोषणके लिए वित्तकी अपेक्षा उतनी नही होती जितनी कि मठ या आश्रमो मे जुटे चेलोंके पोषणके लिए होती है. एक सासारिक व्यक्ति अपने गुणोकी कीर्तिकी लालसा से उतना ग्रस्त नही होता जितना कि एक आधुनिक परमहंस अपने त्यागकी कीर्तिकी लाल-सासे ग्रस्त होता है !

वस्तुत: विरक्तकी त्यागभावना और त्यागीकी वैराग्यभावना मे बड़ा अन्तर पड़ जाता है !

वास्तविक वैराग्य व्यक्तिको किसी सीमा तक ऊपर उठा सकता है परन्तु वैराग्यहीन त्याग हमे और नीचे धकेल देता है श्रीमहाप्रभुका सिद्धान्त है कि किसी वस्तुके व्यर्थ त्याग-की अपेक्षा उसे भगवान्‌को समर्पित कर देना उचित बात है अतएव जब हम समर्पित नही कर पाते तब केवल विरक्तिके आधार पर प्राप्त वस्तुके त्यागके बजाय भगवदनुरक्तिकी तन्मयतामे उसका त्याग किया जाये तो बात बन सकती है !

त्याग अपने-आपमे एक स्वतन्त्र मार्ग होनेकी महत्ता नही रखता है मार्ग तो तीन ही होते है. (१) कर्ममार्ग (२) ज्ञानमार्ग (३) भक्तिमार्ग कर्म ज्ञान या भक्तिके अगरूपेण त्यागकी महत्ता अवश्य मान्य हो सकती है, किन्तु इनमे रहित केवलत्याग तो मनुष्यको केवल परिव्राजक ही बना पाता है—कही पहुचाता नही !

श्रीमहाप्रभु संन्यासका निर्णय केवल वैराग्यके सन्दर्भमे देना पसन्द नही करते है कर्म ज्ञान या भक्ति मे से किसी एकके साथ वैराग्यके प्रकट होनेपर सन्यास या त्याग का विचार प्रासगिक बनता है. भागवत ( ११।२०।७-८ ) मे आता है कि—"योगास्त्रयो मया प्रोक्ता नृणा श्रेयो विधित्सया ज्ञान कर्म च भक्तिश्च नोपायोन्योस्ति कुत्रचित्, निर्विण्णना ज्ञानयोग... कर्मयोगस्तु कामिना . . . न निर्विण्णो नातिसक्तो भक्तियोगोस्य सिद्धिदः" अर्थात विरक्ति-प्रधान साधकके लिए ज्ञानयोग, सकाम साधकोके लिए कर्मयोग; एवम् न विरक्त और न अतिसकाम ऐसे साधकके लिए भक्तियोग सिद्धिप्रद होता है. इन कर्म ज्ञान या भक्ति के मार्गपर आगे बढनेपर अर्थात् वैराग्यके दृढ होनेपर संन्यासका विचार प्रासगिक बनता है.

इस विषयमें सुबोधिनी (३।१२।४२) मे एक विस्तृत स्पष्टीकरण श्रीमहाप्रभुने दिया है. उसका अनुवाद देख लें :

"ब्राह्मणके लिए यह आवश्यक है कि वह चारों आश्रमोमे क्रमश: प्रविष्ट हो. . किसी एक आश्रममे स्थिर होना भी, वैसी कामना होनेपर, शास्त्रानुमत है... जो ऊर्ध्वरेतस भक्त

रीतिसे, तब तदनुरूप पारमहंस्य सन्यास भी आपने ग्रहण किया। "सन्यासेन देहत्यागं करोति स परमहंसो नाम ■ परमहंसो नाम।" (जाबालोपनिषद्)

अतएव अन्त करणप्रबोधके– "प्रोढापि दुहिता यद्वत् स्नेहान्न प्रेष्यते वरे तथा देहे न कर्तव्य" तथा सर्वनिर्णयके–'न्यासे सर्वपरित्यागी . तादृशस्य बलाद्वापि देहत्यागो विमुक्तिद" इन दोनो वचनाको तुलना करनी चाहिये

फलत सन्यासनिर्णय, यह सहज सम्भव है कि, श्रीमहाप्रभुने बदरिकाश्रमकी प्रथम यात्राके समय नरहरि सन्यासीके लिए ही बनाया हो

भक्तिवर्धिनीमें यह दिखलाया गया था कि जिनका बीजभाव दृढ हो वे गृहत्याग करके भगवत्कथाक श्रवण–कीर्तन द्वारा भी अपनी भक्तिको विकसित कर सकते हैं अन्यथा बीजभावके दृढ न होनेपर उसे दृढ करनेके लिए व्यक्तिका यथावसर भगवत्सेवा और भगवत्कथा दोनोको अपनाना चाहिये, यदि वह मध्यावृत्त हो तो अन्यथा व्यावृत्त होनेकी अवस्थामें अर्थात् निजगृहमें भगवत्सेवाकी सम्भावना न होनेपर बीजभावकी दृढताके लिए केवल भगवत्कथाक श्रवणादिसे भी प्रेमासक्तिव्यसनकी उत्तरोत्तर अवस्थाओमें भक्ति विकसित हो सकती है

भगवत्कथाके श्रवणादिसे जब स्नेह उत्पन्न होता है तब सासारिक विषयोमे अनुराग नष्ट हो जाता है– भगवदासक्ति स्थिर होनेपर भगवत्सेवामे अनुपयोगी गृहमें भक्तको अरुचि हो जाती है– भगवत्सेवार्थ उपयोगमे न आनेवाला घर और घरकी सारी वस्तु भक्तकी भक्तिमे बाधक लगने लगती है—धीरे धीरे या जब कृष्णभक्ति व्यसनदशापर पहुच जाती ■ तब जीव कृतार्थ हो जाता है ऐसी व्यसनदशापर पहुचनेवाले व्यक्ति के लिए भी भगवत्सेवार्थ अनुपयोगी घरम सतत निवास करना, कभी भक्तिमे व्यवधानका हेतु बन सकता है भक्तिका विनाशक हो सकता है अत भक्तिकी दृढताके लिए केवल कृष्णदर्शनकी तीव्र लालसासे जो गृहत्याग कर पाते हैं, उन्हें सर्वोत्कृष्ट परा सुदृढ भक्तिका लाभ होता है (भक्तिवर्धिनी)

इसके बाद भक्तिवर्धिनीमे जो इस प्रकारका त्याग नही कर पाते उनके कर्तव्य दिखलाये गये है, परन्तु जो त्याग करनेम समर्थ हो उन्हें वह त्याग कैसे किस अवस्थाम, किस भावनाक साथ और किस लक्ष्यकी प्राप्तिके लिए करना चाहिय इत्यादि विषयोका निरूपण नही हो पाया जिनसे स्वगृहमे भगवत्सेवा न निभती हो और जो गृहत्यागके लिए भी अपने-आपको समर्थ न पाते हो उन्हे यह सुझाया गया था कि उन्हे ऐसे भगवदीयोके समीप बसना चाहिये कि जो सेवा कथा परायण जीवनयापन करते हो वे यदि छूट दे तो उनके द्वारा की जाती भगवत्सेवामे सहयोगी-परिचारक भी बनना चाहिये अन्यथा कमसे कम उनके द्वारा की जाती भगवत्कथामें श्रोताके रूपमें तो सम्मिलित होना ही चाहिये इसी सन्दर्भमें भगवत्कथाके लिए आवश्यक योग्य वक्ता एवम् श्रोता का स्वरूप बीचमें जलभद और पञ्चपद्यानिमें समझाया गया था अत अवशिष्ट गृहत्यागका विचार आवश्यक था ही, जिसे इस सन्यासनिर्णय ग्रथ द्वारा पूर्ण किया जा रहा है

सर्वनिर्णय निबंधमें कारिका १९१ से कारिका २१४ तक सन्यास त्याग भक्ति आदि अनेक विषयोका निरूपण किया गया है, पर वह मुख्यतया पुष्टिमार्गीयोके लिए नही, अपितु सभी दैवी जीवोको लक्ष्यमें रखकर किया गया उपदेश है. अतएव कारिका १९६ में– "भक्तिः स्वतन्त्रा शुद्धा च दुर्लभेति. न सोच्यते" वचन उपलब्ध होता है. अतएव वहा, संन्यासग्रहणके शास्त्रीय प्रकारपर बहुत भार दिया गया है– "त्रिदण्डं परिगृह्णीत सर्वशास्त्राविरोधि सत्" जबकि यहा सन्यासनिर्णयमें सामान्य रूपसे "वेशः सोपि न चान्यथा" कहनेसे वह भार दिखलाई नही देता. क्योकि दैवी जीवोके लिये आवश्यक सन्यासके सामान्य प्रकारसे भिन्न एक विशिष्ट प्रकारके संन्यासकी आज्ञा यहा श्रीमहाप्रभु दे रहे है.

सर्वनिर्णयान्तर्गत संन्याससम्बन्धी विचारके प्रारम्भमें श्रीमहाप्रभु आज्ञा करते हैं कि ब्रह्मचर्य गृहस्थ वानप्रस्थ अथवा सन्यास में से किसी भी एक आश्रममें नैष्ठिक होकर रहा जा सकता है, अथवा क्रमशः उत्तरोत्तर आश्रमोमें प्रवेश किया जा सकता है, अथवा आयुष्यके चार समान भाग करके एक-एक भागका यापन एक-एक आश्रममे किया जा सकता है. सर्वत्र फल तुल्य ही होता है क्योकि शास्त्रोमे सभी आश्रमोकी प्रशसा मिलती है एसी स्थितिमे समनन्तरक्रम और आयुःक्रम वाले कल्पमे सन्यास एक शास्त्रीय आवश्यकता प्रतीत होती है

जबकि षोडशग्रन्थान्तर्गत सन्यासनिर्णयमे, कर्ममार्ग, ज्ञानमार्ग या अदृढ बीजभावकी अवस्थामे भक्तिमार्ग मे भी श्रीमहाप्रभु सन्यासको अनुमोदनीय नही मानते

इन दोनो दृष्टिकोणोको एकवाक्यता इस तरह घटित हो जाती है कि पुष्टिमार्गीयेतर दैवी जीवोके लिए आश्रमक्रम अथवा आयुःक्रम कल्पमे, चतुर्थाश्रमरूप सन्यास वर्णाश्रमधर्मके रूपमे शास्त्रविहित होनेके कारण, ज्ञानमार्गीय साधक एवम् मर्यादाभक्तिमार्गीय साधक के लिए अनुष्ठेय ही है, भगवत्साक्षात्कार के न होने पर्यन्त. भगवत्साक्षात्कार होनेके बाद उसकी तन्मयतामे आश्रमधर्मोका त्याग निन्दनीय नही रह जाता यह नियम किन्तु पुष्टिमार्गमे अनिवार्य नही है– "अन्तःकरणे सस्कारविशेषाधायकत्व च प्रतीयते संन्यासस्य. स च सस्कारः फलोपकार्यंगमित्यावश्यक सन्यासो मर्यादामार्गे. पुष्टिमार्गे त्वन्यैव व्यवस्था- 'न ज्ञानं न च वैराग्य प्राय श्रेयो भवेदिह' इति वाक्यात्" (अणु ३।४।१७)."

अत. पुष्टिमार्गीय साधक यदि अव्यावृत्त होकर स्वगृहमे भगवत्सेवाको निभा पाता है तो गृहत्याग या सन्यास अनावश्यक है–"त्यागे वाङ्मनसोरेव भगवति विनियोगो न सर्वेन्द्रियाणाम् गृहिणस्तु सर्व प्रकारेभजन भवति इति परिजनश्च कृतार्थो भवतीति भजने कृत्स्नता" (अणु ३।४।४७). अन्यथा स्वगृहमे भगवत्सेवा न निभनेपर अर्थात् किसी पुष्टिभक्तके व्यावृत्त होनेपर सर्वप्रथम उसे स्ववर्णाश्रमोचित धर्मोका पालन करते हुए भगवत्कथाके श्रवण-मनन-कीर्तन द्वारा भक्तिके बीजभावको दृढ बनाना चाहिये. बीजभावके दृढ होनेपर अपने घरमे भगवत्स्वरूपके सेवा-दर्शन-स्पर्शन आदिके संयोगसुखके न मिलनेके कारण तथा पारिवारिक असहयोग भगवद्विप्रयोगजन्य दुःखानुभूतिमे भी व्यवधानोको देखते हुए गृहत्याग

होते हैं वे चाहें तो नैष्ठिक ब्रह्मचर्य आश्रममें स्थिर हो सकते हैं. सर्वथा वैराग्यरहित अर्थात् उत्कट कामनावालेके लिए गार्हस्थ्य ही ठीक रहता है. उसे वेदोके यथाशक्ति अध्ययन करनेके बाद, शास्त्रीय विधिके अनुसार विवाह करके, यावद्जीवन अग्निहोत्रादि कर्मोके अनुष्ठानमें तत्पर होना चाहिये . अतएव आपस्तम्बकारने सभी आश्रमोको तुल्य माना है. किसी भी आश्रमके कर्तव्योका यथावत् पालन करनेपर सिद्धि मिलती है. कही—कही एक आश्रमकी प्रशंसा करनेके लिए अन्य आश्रमोकी निन्दा भी दिखलाई देती है. पर वास्तविक तात्पर्य उसका किसी आश्रम-विशेषकी प्रशंसाके रूपमे ही लेना चाहिये अन्यथा श्रुतिवचनोंमे परस्पर विरोधाभास होने लगेगा, जबकि ब्राह्मणोका यह कर्तव्य है कि किसी भी श्रुति-वचनको अप्रामाणिक न माने."

कर्म ज्ञान और भक्तिके तीन प्रमुख भेद और तदन्तर्गत अन्य भी उपभेदोको दृष्टिगत रखनेपर इस प्रस्तुत सन्यासनिर्णय ग्रन्थमे कुल आठ प्रकारके सन्यासोके बारेमे हमे निर्णय मिलता है बोधसौकर्यके लिए उन्हें इस वर्गतालिका द्वारा समझा जा सकता है .




आत्मोद्धारके तीनो ही मार्गोमे सासारिक अहन्ता ममताको बाधक माना गया है सासारिक अहन्ता-ममतासे ऊपर उठनेके सच्चे उपाय वैराग्यसहित कर्म ज्ञान अथवा भक्ति तो

हो सकते हैं, पर केवल त्याग या सन्यास नहीं. फिरभी भ्रामक उत्साहवश बहुधा लोग स्वमार्गमे पूर्ण निष्ठा तथा वैराग्य के अभावमे ही त्याग या संन्यास की उतावल कर बैठते हैं और स्वमार्ग तथा सन्मार्ग से भटक जाते हैं।

पुष्टिमार्गीय जीव भी यदा-कदा ऐसे मिथ्याचारवाले त्याग या संन्यास के फेरेमे पड़ सकते हैं. विशेषत. स्वगृहमें भगवत्सेवा न निभा पानेवाले दृढ बीजभाववाले भक्तोके लिए श्रीमहाप्रभुने भी गृहत्यागका जो उपदेश भक्तिवर्धिनीमें दिया है, उसका तात्पर्य भलीभाति न समझ पानेके कारण, पुष्टिमार्गीय विवेकके बिना उतावलमें कोई त्याग या संन्यास की गलती कर सकता है ऐसोके पल्ले पछतावेके अलावा और कुछ नहीं पड़ता।

अपने पुष्टिमार्गीय जीव ऐसे मिथ्याचारके फेरेमें पड कर अपने पुष्टिमार्गीय फलसे भी वञ्चित न रह जाये– सारे जीवनको ही एक महापाषण्डका नाटक न बना लें एतदर्थ श्रीमहाप्रभु त्याग सन्यास सम्बन्धी अपने विचारोको स्पष्ट करते है. ताकि त्याग या संन्यास के चक्करमें फसनेवाले सम्भावित पश्चातापसे बच पायें, और जो नरहरि संन्यासीकी तरह सन्यास ले ही चुकें हो उन्हें पुन भक्तिमार्गपर अग्रसर होनेकी दिशा सूझ पाये– पश्चातापसे उभर कर।

(१) कर्मफल-त्यागरूप कर्ममार्गीय सन्यास

तत्तद् वर्ण या आश्रम आदिकी दृष्टिसे जो कर्म नियत होते हैं उनका परित्याग उचित नही होता. (द्र. गीता ३/८) सर्वनिर्णयके प्रारम्भम यह कह दिया गया है कि केवल नित्यकर्मका फल आत्मशुद्धिरूप होता है तथा उसके त्याग करनेपर प्रत्यवाय–अपराध लगता है. यही नित्यकर्म ब्रह्मविद्याके सहित हो तो ब्रह्मानन्दका दान भी करता है– "भगवदानन्दरूप फल ब्रह्मज्ञानपूर्वकस्य यथोक्तकर्मकर्तुरेव" (सर्वनि ४) इस गुरुतमे वर्णाश्रमाचारादि शास्त्रविहित नित्य कर्मव्योका त्याग देहाभिमानके बने रहनेतक शास्त्रनुमोदित नही है (यावद् देहाभिमान. तावद् वर्णाश्रमधर्म एव स्वधर्म. सुबो ३।२८।२).

निष्काम कर्मानुष्ठान करनेवाला भी ब्रह्मसस्थ हो सकता है, ऐसा श्रीशंकराचार्य नही मानते—"तस्माद् य एव ब्रह्मसस्थ स्वाश्रमविहितकर्मवता सोऽमृतत्वमेति न. कर्मनिमित्तविद्याप्रत्ययोविरोधात्" (छा भा २।२३।१). किन्तु गीता (३।५–८) के अनुसार श्रीमहाप्रभुके मतमें नियत कर्मका त्याग उचित नही होता अत ब्रह्मचर्य गार्हस्थ्य या वानप्रस्थ में से किसी भी एक आश्रममें नैष्ठिक व्रत धारण कर स्वाश्रमोचित कर्तव्योका जो निष्काम अनुष्ठान करता है उसे आत्मशुद्धिरूप कर्ममार्गीय मोक्षकी प्राप्ति होती है (द्र. गीता २।५०–५१) यदि ब्रह्मविद्याके साथ कोई निष्काम कर्मानुष्ठान करता है तो ज्ञानमार्गीय ब्रह्मानन्दकी प्राप्ति भी सम्भव है (द्र गीता ४।२४) भगवद्भक्तिके साथ निष्काम कर्मानुष्ठान करनेवालोको भजनानन्दकी प्राप्ति भी सम्भव है (गीता ९।३४).

बृहदारण्यकोपनिषद् (४।४।२२) में– "तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन एतमेव विदित्वा मुनि. भवति" कह कर ब्रह्मचर्य, नैष्ठिक

ब्रह्मचर्य, गार्हस्थ्य और वानप्रस्थ आश्रमके कर्तव्योंके निष्काम अनुष्ठानको भी चित्तकी ब्रह्मज्ञानोपयोगी शुद्धिमें– विविदिषामें साधन माना गया है.

वेदानुवचन यज्ञ और दान का आश्रमधर्म होना छान्दोग्य (२।२३।१) के– "त्रयो धर्मस्कन्धा. यज्ञोऽध्ययनं दानमिति. प्रथमस्तप एव. द्वितीयो ब्रह्मचार्याचार्यकुलवासी. तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्. सर्वे एते पुण्यलोका भवन्ति, ब्रह्मसंस्थोऽमृतत्वमेति." वचनसे एकवाक्यता करनेपर स्पष्ट होता है. 'वेदानुवचन' और 'अध्ययन' समानार्थी हैं. 'यज्ञ' और 'दान' तो बृहदारण्यक एवम् छान्दोग्य दोनोंमें समानरूपमें मिलते ही हैं छान्दोग्यमें इन अध्ययन दान और यज्ञ के ब्रह्मविद्यारहित अनुष्ठानका फल पुण्यलोककी प्राप्ति माना गया है, तथा ब्रह्मविद्यासहित अनुष्ठानका फल "ब्रह्मसंस्थोऽमृतत्वमेति" कह कर ब्रह्मज्ञानोत्पत्ति द्वारा मोक्ष भी माना हो है. 'आचार्यकुलवासी' पद द्वारा इन कर्तव्योंकी आश्रमधर्मता भी स्पष्ट की गयी है.

गीता (१८।४।७) में भी भगवान्ने अतएव इन कर्मोंके त्यागको अनुचित माना है– "निश्चयं शृणु मे तत्र त्यागे . यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत्, यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्, एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्, नियतस्य तु संन्यासः कर्मणो नोपपद्यते मोहात्तस्य परित्यागः तामसः परिकीर्तितः". कर्मसंन्यास और कर्मयोग में कर्मयोगकी उत्तमता दिखलाते हुए कर्मयोगका भी ब्रह्मसंस्थ होकर अनुष्ठान– "ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः लिप्यते न स पापेन पद्मपत्रमिवाम्भसा". (गीता ५।१०) भगवान्ने सम्भव माना ही है

कर्ममार्गमें अतएव काम्यकर्म अथवा कर्मफलाशा का त्याग तो उचित माना है किन्तु नियत कर्मोंके त्यागको उचित नहीं माना गया है. "अनाश्रितः कर्मफलं कार्यं कर्म करोति यः स संन्यासी च योगी च न निरग्निर्न चाक्रियः" (गीता ६।१) आदि अनेक वचनोंसे काम्यकर्म तथा कर्मफलाशा के त्यागको सच्चा संन्यास माना गया है, नियत कर्मोंके त्यागको नहीं

सर्वनिर्णय (कारिका २४६ के प्रकाश) में श्रीमहाप्रभुने कहा है–"गृहस्थस्यैतन्मुख्यम्. एवं कुर्वन् सकुटुम्बो भगवत्सायुज्यमश्नुते. ब्रह्मचारिप्रभृतीनामपि सेवकसाधनसम्पत्तौ एतत्कर्तव्यम्" इससे सिद्ध होता है कि पुष्टिमार्गमें भी देहाभिमानके बने रहने तक नियत कर्मोंके त्याग किये बिना भक्तिमार्गीय कर्तव्योंका पालन आवश्यक होता है चतुर्थाश्रममें गृहत्याग विहित होनेसे स्वगृहमें भगवत्सेवाके निर्वाहका प्रश्न ही उपस्थित नहीं होता अतः उसमें कृष्णदर्शनलालसाके साथ निरन्तर तीर्थयात्राका उपदेश दिया गया है, यहीं सर्वनिर्णयमें.

अतः पुष्टिमार्गीय जीवके लिए कर्ममार्गीय दृष्टिकोणसे यावद्-देहाभिमान स्ववर्णाश्रमधर्मका त्याग उचित नहीं है, तथा साधनदशामें भी गृहत्याग उचित कर्तव्य नहीं रह जाता है– "कर्ममार्गे न कर्तव्य" शास्त्रनियत वर्णाश्रमधर्मोंके अनुष्ठानमें काम्यकर्म तथा कर्मफलाशा

तो त्याज्य हैं ही "वर्णाश्रमवता धर्म एष आचारलक्षण: स एव मद्भक्तियुतो निःश्रेयसकर: पर:" (भाग. ११।१८।४७).

(२) चतुर्थाश्रमरूप कर्ममार्गीय त्याग

जैसे नैष्ठिक व्रतके साथ ब्रह्मचर्य, गृहस्थ या वानप्रस्थ आश्रमोंका विधान है, वैसे ही क्रमश: चतुर्थाश्रममें प्रवेश करनेका भी विधान मिलता ही है यथा पूर्वोदाहृत बृहदारण्यकके वचनमें ही यह आता है कि "एतमेव प्रव्राजिनो लोकमिच्छन्त: प्रव्रजन्ति.. पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति ... नैनं कृताकृते तपत " अर्थात् वेदाध्ययन, दान, यज्ञ, तप रूप कर्मवाले ब्रह्मचर्य, गृहस्थ और वानप्रस्थ आश्रमोंके द्वारा ब्राह्मण जिस ब्रह्मके ज्ञानकी प्राप्ति करना चाहते हैं, सन्यास-आश्रम द्वारा भी उसी ब्रह्मकी प्राप्ति चाही जाती है पुत्र धन या लोकके बारेमें सभी तरहकी कामनाओंको छोडकर जो भिक्षाचर्या करते है.. उन्हे कृताकृत कर्मोंके फल भुगतनेका संताप नही होता

जाबालोपनिषद्में भी— "ब्रह्मचर्यं समाप्य गृही भवेद्, गृही भूत्वा वनी भवेद्, वनी भूत्वा प्रव्रजेद्" यों क्रमश: एक आश्रमके अनन्तर दूसरे आश्रममें प्रवेश करनेका क्रमपक्ष दिखलाया ही गया है

मनुस्मृति (६।८६—८७) के भी—"ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा. चत्वार: पृथगाश्रमा: सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रनिषेविता: यथोक्तकारिणं विप्रं नयन्ति परमां गतिम्" वचनमें क्रमपक्षका उल्लेख मिलता है

भागवत (११।१८।११—२७) में वानप्रस्थकी रीति समझाकर चतुर्थाश्रमरूप सन्यास-धर्मका निरूपण भी किया गया है इसके अन्तर्गत त्रिदण्ड—सन्यासकी रीति भी समझायी गयी है "यदा कर्मविपाकेषु लोकेषु निरयात्मसु विरागो जायते सम्यङ् न्यस्ताग्नि: प्रव्रजेत्तत: " आदि वचनो द्वारा

इससे सिद्ध होता है कि चतुर्थाश्रमरूप सन्यासग्रहण भी एक नियत कर्तव्य था है

जो "तृतीयेऽव्यन्तमात्मानमाचार्यकुलेऽवसादयन्" वचनके अनुसार नैष्ठिक ब्रह्मचर्यका व्रत धारण नही कर लेते, अथवा "यावज्जीवमग्निहोत्रं जुहोति" वचनके अनुसार नैष्ठिक-गार्हस्थ्यका व्रत धारण नही कर लेते, अथवा 'अरण्यमियात् ततो न पुनरेयात्"वचन के अनुसार नैष्ठिक वानप्रस्थका व्रत धारण नही कर लेते, उन्हें क्रमपक्षके अनुसार तीन आश्रमोंके बाद चतुर्थ सन्यासाश्रममें भी प्रवेश अवश्य करना चाहिये

इसका अपवाद भी यद्यपि जाबालोपनिषद्‌में दिखलायी देता है—"यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वा वनाद्वा अथ पुनरव्रती वा व्रती वा, स्नातको वाऽस्नातको वा, उत्सन्नाग्निरनग्निको वा यदहरेव विरजेत् तदहरेव प्रव्रजेत् " किन्तु यह प्रकार सर्वसाधारण नही हैं किन्तु अतिविरक्त ब्रह्मज्ञानियोके लिए ही है– "एष पन्था ब्रह्मणा हानुवित्तस्तेनैति सन्यासी ब्रह्मविद् इति एवमेव एष" (वही) साथ ही साथ यह नही भूलना चाहिये ब्रह्मज्ञानी भी इस प्रकारका सन्यास अतिवैराग्यके प्रकट होनेपर ही कर सकते हैं, अन्यथा

ननु तासां तेषां च विप्रयोगक्लेशे गुणगानदशासमयः (स) तस्य कथं मोदरूपतेत्या-शङ्काहुः गुणेष्विति ।

**गुणेष्वाविष्टचित्तानां सर्वदा मुरवैरिणः ।**
**संसारविरहक्लेशौ न स्यातां हरिवत्सुखम् ॥ १२ ॥**

मुरवैरिणः गुणेषु आविष्टचित्तानां सर्वदा संसारविरहक्लेशौ न स्यातामिति सम्बन्धः । अत्रायं भावः । मुरस्य जलदोषात्मकत्वात्सागरस्थितस्य वैरित्वोक्त्या रससागरदोषनिवारकत्वं व्यज्यते । तस्य गुणेष्वानन्दमयेषु विरहसामयिकोत्कटतापनिवारकजीवनहेतुभूतेष्वाविष्ट-चित्तानां तौ न स्यातामिति भावः । चित्ते ह्यावेशोक्त्यान्यावेशाभावो बोध्यते । अत एव सर्वदेत्युक्तम् । भगवत्सेवार्थेष्वावृत्तावपि तत्परत्वार्थम् । यथोक्तं जीवोत्कटतापनिवर्तका-चार्यैर्भक्तिवर्धिन्यां 'व्यावृत्तोपि हरौ चित्तं श्रवणादौ यतेत्सदे' त्यादिना । एवं गुणाविष्टचि-त्तानां भगवति संसारस्याहन्ताममतात्मकस्य विरहाभाव इति यावत्, विप्रयोगजः क्लेशश्च तावुभावपि न स्याताम् । अयमर्थः । भगवत्यहन्ताममतासहितनित्यसंयोग एव भवेत्, सुखं भवेदिति शेषः । तत्र निदर्शनमाहुः हरिवत् । हरिवत्तौ न स्यातां, सुखं भवेत् । अत्रायं भावः । भगवतो जीवेष्वहन्ताममताभावो कदापि यथा न भवति स्वकीयत्वात्तेषां तद्वि-प्रयोगजक्लेशोपि तथा । 'भवतीनां वियोगो मे न हि सर्वात्मने'ति भगवतैवोक्तत्वदभावः । निवेदनानन्तरं भगवत्स्वरूपात्मकतैव सिध्यति । एवं सति भगवानिव तौ न स्यातां, सुखं च स्यादेवेति भावः ॥ १२ ॥

भगवत एवं करणे दयालुत्वं हेतुत्वेनाहुः तदेति ।

**तदा भवेद्दयालुत्वमन्यथा क्रूरता मता ।**
**बाधशङ्कापि नास्त्यत्र तदध्यासोपि सिध्यति ॥ १४ ॥**

यदा पूर्वोक्तप्रकारेण सुखं स्यात्तदा भगवति दयालुत्वं भवेत् । अन्यथा मर्यादा-दिप्रवेशेन क्रूरता मता सम्मता, पुष्टिस्थानामिति शेषः । भगवता एवं करणेभिमाना-दिबाधशङ्का मर्यादाधतिक्रमात्तत्कृतबाधो वा भवेदित्याशङ्क्य नेत्याहुः । बाधशङ्कापीति । अत्र अस्मिन्मार्गे बाधशङ्कापि नास्ति । अपिशब्देन तच्छङ्कैव नास्ति कुतः पुनर्बाध इति भावो व्यज्यते । भगवदध्यासस्य दृढत्वाद्देहाध्यासाभावात्र बाधशङ्केत्याहुः तदिति । तस्य भगवतोऽध्यासोऽपि सिध्यतीति भावः । अपिशब्देन भगवतोप्येतदध्यासो रसरीत्या सिध्यतीति बोध्यते ॥ १४ ॥

ननु भगवतो दयालुत्वे सुखोत्पादकता भवतु, परमस्य लौकिकत्वाद्भगवतो-लौकिकत्वात्कथमेतस्य लौकिकनिरुद्धा निरोधसिद्धिरित्याशङ्क्याहुः संसारेति ।

**संसारावेशदुष्टानामिन्द्रियाणां हिताय वै ।**
**कृष्णस्य सर्ववस्तूनि भूम्न ईशस्य योजयेत् ॥ १२ ॥**

संसारावेशेन दुष्टानामिन्द्रियाणां हिताय वै निश्चयेन तानि ईशाय योजयेदिति सम्बन्धः । अत्रायमर्थः । संसारावेशेन भगवद्विनियोगप्रतिबन्धः स्यात्, तेन तदावेशो दुष्ट इति तदभावार्थमिन्द्रियाणां निश्चयेन यथा हितं भवति, तानि भगवदर्थे योजयेत्, तेन तथात्वं भवेत् । नन्वेतत्सामग्र्याः पूर्वं लौकिको दोषो निरूपित इत्याशङ्क्य तस्य दोषस्य वस्तुस्वरूपज्ञाने सुरूपतेति वस्तुस्वरूपमाहुः । यतो वस्तूनि सर्वाणि भूम्नः कृष्णस्य । अतो समर्पिते लौकिकत्वं नाशङ्कनीयमिति भावः । 'क्रीडार्थमात्मन इदं त्रिजगत्कृतं ते' 'क्रीडाभाण्डमिदं विश्व'मित्यादिषु तथैव निरूपितम् । किञ्च, स भूमा समर्थो भवति लौकिकनिवारणपूर्वकमलौकिकत्व(सम्पादकत्व)सम्पादकः, स्वयं च लौकिकरसभोगार्थं स्वस्वरूपमर्यादोलङ्घनेनापि स्वभक्तवश्यता स्थित्या तद्भावानुसारेण तस्य रसादानार्थं रमणं करिष्यतीतिभावः । यद्वा, संसारावेशदुष्टानामिन्द्रियाणां सम्बन्धीनि सर्ववस्तूनि भावात्मकानि वै निश्चयेन कृष्णस्य हिताय रसभोगार्थं योजयेत् । भूम्न इति विशेषणेन स्वस्यापि रसभोगः सिध्यतीति ज्ञाप्यते । कीदृशाय हिताय ईशाय आधिदैविकायेत्यर्थः ॥ १४ ॥

ननु संसाराविष्टचित्तदुष्टानां कथं तत्र विरागेण भगवत्यनुरागपूर्वकं समर्पणं स्यादित्याशङ्क्याहुः भगवद्धर्मसामर्थ्यादिति ।

**भगवद्धर्मसामर्थ्याद्विरागो विषये स्थिरः ।**
**गुणैर्हरिसुखस्पर्शान्न दुःखं याति कर्हिचित् ॥ १५ ॥**

भगवद्धर्मसामर्थ्याद्विषये विरागः स्थिरः स्यादित्यर्थः । भगवद्धर्माणामेतादृशमेव सामर्थ्यं येन तद्धर्मप्रवेशमात्रेणैव लौकिके विषये विरागः स्यात्, तदनन्तरं गुणैः भगवदीयैर्वर्णितैरलौकिकस्वरूपेण हरिसुखं हरेः सुखस्य स्पर्शं प्राप्नोति । कर्हिचिद्भगवदिच्छया परीक्षाद्यर्थकृतमपि दुःखं न यातीत्यर्थः । यद्वा, भगवद्धर्मसामर्थ्याद्विषये भगवदीये विशिष्टो रागः स्थिरः स्यात् । किञ्च, गुणैः हरिसुखस्पर्शं याति । अयं भावः । गुणगानेनालौकिकत्वे सम्पन्ने हरेरपि सुखरूपः स्पर्शो यस्य तादृग्भावं प्राप्नोतीत्यर्थः । किञ्च, हृदयतो दुःखं विप्रयोगक्लेशानन्दानुभवात्मकं कर्हिचिदपि न गच्छतीति भावः ॥ १५ ॥

एवं निष्प्रत्यूहं तत्स्वरूपं निरूप्य तत्कर्तव्यप्रकारमाहुः एवमिति ।

**एवं ज्ञात्वा ज्ञानमार्गादुत्कर्षं गुणवर्णने ।**
**अमत्सरैरलुब्धैश्च वर्णनीयाः सदा गुणाः ॥ १६ ॥**

एवं पूर्वोक्तप्रकारेण ज्ञानमार्गादुत्कर्षो निरूपितस्तं गुणवर्णने ज्ञात्वा अमत्सरैर्मत्सरादिदोषरहितैर्ज्ञानादिषु अलुब्धैः स्वस्य रसभोगेच्छायां भगवदिच्छार्थं गुणाः सदा वर्णनीया इति भावः । सदेति पदेन क्षणमप्यन्यथा न स्थेयमिति ज्ञापितम् । यद्वा, गुणवर्णने य उत्कर्षस्तं ज्ञानमार्गात्सर्वं भगवदर्थमितिरूपाद्भगवदुपदिष्टगोपतुल्याद् (?) ज्ञात्वा सदा अमत्सरैः

सापत्न्यादिदोषरहितैरलुब्धैर्भगवतः स्वामृतग्रहणसमये मानादिदोषरहितैर्गुणा वर्णनीयास्त-ज्ज्ञानार्थं, व्रजविलासिनीवत्स्वसमानशीलेष्विति शेषः ॥ १६ ॥

एवं गुणवर्णनस्यावश्यकत्वं सोपपत्तिकमुपपाद्य तद्वर्णने क्लेशसहनात्मकं दूषणमुद्भाव्य परिहरन्ति **हरिमूर्तिरिति** ।

**हरिमूर्तिः सदा ध्येया संकल्पादपि तत्र हि ।**
**दर्शनं स्पर्शनं स्पष्टं तथाकृतिगती सदा ॥ १७ ॥**

सदा हरिमूर्तिर्ध्येयेति सम्बन्धः । अकारणसर्वदुःखहर्त्री दुःखहरणार्थमेव मूर्तिधारकत्वस ध्येयेति भावः । हीति युक्तश्चायमर्थः । स्वस्य तदर्थप्रयोजनात्सैव ध्येया । ननु तद्ध्यानमात्रेण कथं दुःखनिवृत्तिः स्यादत आहुः **दर्शनमिति** । ध्यानेन **दर्शनं स्पर्शनं** च **स्पष्टमेव** भवतीत्यर्थः । ननु दर्शनं स्पर्शनं च योग्यरूपाभावे कथं स्यादित्यत आहुः तथेति । ध्यानेन तथा आकृतिर्गतिश्च भवेताम् । सदेति नित्यमित्यर्थः । न स भावः पुनरन्यथा भवेत् ॥ १७ ॥

नन्वेतत्सर्वं फलदशायां सम्भवति, न साधनदशायामित्याशङ्क्य साधकानां तत्सिद्ध्यर्थमुपायमाहुः **श्रवणमिति** ।

**श्रवणं कीर्तनं स्पष्टं पुत्रे कृष्णप्रिये रतिः ।**
**पायोर्मलांशत्यागेन शेषभागं तनौ नयेत् ॥ १८ ॥**

श्रवणं कीर्तनं तथात्वसम्पादकं स्पष्टमेव, तस्मात्कर्तव्यं, तत्करणेन तथात्वं स्यादित्यर्थः । तथाभूतस्य दुःसंगवर्जनमाहुः । भगवदप्रियस्य त्यागे निदर्शनमाहुः **पायुरिति** । मलांशत्यागेन यथा पायुर्ग्रह्यते तथा बहिर्मुखपुत्रादित्यागेन शेषभागं तनौ स्वकीयत्वेन नयेत् ॥ १८ ॥

ननु सर्वेषामात्मा भगवानेवास्ति, तस्मात्कथं तत्कृत्याः, स्वान्तरङ्गत्वादपि त्यागोनुचित इत्याशङ्क्याहुः **यस्येति** ।

**यस्य वा भगवत्कार्यं यदा स्पष्टं न दृश्यते ।**
**तदा विनिग्रहस्तस्य कर्तव्य इति निश्चयः ॥ १९ ॥**

यस्य भगवत्कार्यं स्पष्टं न भवति स न भगवदंशः किन्तु प्रकृत्यंश एव, आन्तरं तथा भावे बाह्यमपि तथैव भवति, अन्यथा तु पाषण्डित्वमेव । अत एव निबन्धेऽस्मत्प्राणेश्वरैः 'कृष्णसेवापर'मिति श्लोकविवरणे सेवापरगुरुरित्यादिना तथैव निरूपितम् । विकल्पेन यस्यार्थे भगवान् स्वकार्यं रसरूपं स्पष्टं करोत्येवं न दृश्यत इति व्यज्यते । तदापि निरूपितो यो हस्तः वामहस्तस्तस्य विधिः कर्तव्यः । अयमर्थः । यथा मलांशत्यागानन्तरं वामहस्तस्य शुद्धिं विधाय सर्वकार्योपयोगित्वं क्रियते तथा तस्य स्वात्मजलात्तन स्वांशभगवति निवेदनं कृत्वा स्वांशं स्वस्मिन्नावेश्य तस्य त्यागो विधेयः । अस्मिन्नर्थे न सन्देह इत्यर्थः ॥ १९ ॥

एवं निरोधस्वरूपं निरूप्यान्यनिषेधपूर्वकमेतत्करणार्थमस्य सर्वाधिकत्वमुक्त्वोप-संहरन्ति नात इति ।

नातः परतरो मन्त्रो नातः परतरः स्तवः ।
नातः परतरा विद्या तीर्थं नातः परात्परम् ॥ २० ॥

अतः परतरो मन्त्रो नास्ति, तेन मन्त्रादिषु विश्वासं विहायायमेव ग्रन्थो जाप्यः । एतदुक्तप्रकारेण ध्येयमित्यर्थः । अतः परतरोन्यः स्तवो न । तेनैतदुक्तप्रकारेणैव प्रभुः स्तुत्य इत्यर्थः । अतः परतरा विद्यापि न । या विद्येकोनविंशाध्याये भ्रतप्रस्तावे निरूपिता सेयमेवेत्यर्थः । अतः परतरं तीर्थमपि न । तीर्थे प्रतिबन्धकपापनिवर्तकत्वमस्ति, न त्वाधि-दैविकप्रतिबन्धनिवर्तकत्वम्, अस्य चाधिदैविकतन्निवर्तकत्वमस्तीति नातः परतरं तन्निवारक-मन्यदिति भावः । तस्मात्प्रतिबन्धकापगमार्थमेतदेव स्तोत्रं सेव्यमिति भावः ॥ २० ॥

इति श्रीगोपिकाधीशवल्लभाचार्यसूचितः ।
निरोधो विवृतस्तेन सदा तुष्यन्तु ते मयि ॥ १ ॥
निरोधसंशयोऽनेन प्रकारेण सदा बुधैः ।
छेत्तव्य इति हि ज्ञात्वा तत्कृपातो विवेचितः ॥ २ ॥

इति श्रीश्यामलात्मजश्रीव्रजराजविरचितं निरोधलक्षण-विवरणं सम्पूर्णम् ॥

---

'भक्त्या त्वनन्यया,' 'विशते तदनन्तरम्' 'ज्ञानयोगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षण,' इत्यादिवाक्यै
पुरुषोत्तमसायुज्यफलकत्वेन निरोधाजनकत्वात् । 'ननु भक्त्या सञ्जातये'त्यादिवाक्यैर्मर्यादाभक्ते पुष्टिभ
क्तिफलत्वेन, सा च निरोध इति कथं न निरोधजनकत्वमिति चेत्, उच्यते, तस्या अनुग्रहसहकारित्वेन
परम्परासाधनत्वात् । अन्यथा 'नोपामितमहत्तमा' इति वाक्यं विरुध्येत । महदुपासनस्य मर्यादा
भक्तिरूपत्वात्, न द्वितीया । तस्यास्तदभिन्नत्वात्, न हि स्वमेव स्वं प्रति साधनं भवति । तर्हि किमा
कस्मिकत्वमेवेति चेत्, न, तादृशविशेषानुग्रहस्य कारणत्वात्, तादृशत्वं गुणगानसहकृतत्वं विशेषश्च तथा
फलदानेच्छैवेति संक्षेपः । वस्तुतस्तु न गुणगानादेरपि साधनत्वं, नि साधनत्वभङ्गात्, तथापि योगक्षेम
साधारणसाध्यत्वमादाय तथोक्तम् । अथ कथं निरोधस्य फलत्वमिति । सुखदुःखाभावान्यतरभावात् ।
प्रत्युतामुके स्वविषयाप्राप्त्या दुःखसहकृतत्वाच्चेति । उच्यते । निरोधो हि प्रपञ्चविस्मृतिसहिता
आसक्तिः, सा च स्वविषयविषयकविविधमनोरथजनको भावः, तस्य च रसरूपत्वेन सुखरूपत्वात् ।
'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती'ति श्रुतेः । प्रपञ्चविस्मृतिरूपत्वेन प्रापञ्चिकदुःखाभावरूपत्वाच्च ।
किञ्च, फलं हि पुरुषार्थः, तत्त्वं च तेन स्ववृत्तितयेष्यमाणत्वम् । तथा च आसक्तिमध्यपतितदुःखस्य
आकाङ्क्षणीयत्वेन तथात्वम् । 'विपदः सन्तु ताः शश्व'दिति वाक्यात् । अन्यथा श्येनादावपि
तज्जन्यनरकस्य तदुभयरूपताभावेन फलत्वं न स्यात् । 'भूयान् मे नरकः शत्रुर्विपद्यता'मि'ति धिया
श्येनकरणात् । सुखसाधनं तदिति चेत्, तदा प्रकृतेऽपि दीयतां दृष्टिः । न च सुखभ्रमात् प्रवृत्तिरिति
साम्यम् । नरके सुखभ्रमायोगात् । तस्मात् पुरुषार्थ एव फलम् । वस्तुतस्तु दुःखमेव न, किन्तु
परमानन्द एव । अत एव श्रीशुके सर्वोन्ते 'रेमिरे' इत्युक्तम् । अत एव श्रीमदाचार्यैः 'ततो निरोधो महाफल'
इत्यभिहितम् । एवं सति भक्तिमार्गे निरोधस्यैव फलत्वात् ससाधनतन्निरूपणं कुर्वन्त श्रीमदाचार्या तस्य
दुर्लभत्वज्ञापनाय प्रार्थनारूपेण निरूपयन्ति 'यच्च दुःख'मिति । निरोधो हि प्रपञ्चविस्मृतिपूर्वक
भगवदासक्तिः । सा च स्वविषयदर्शनाभ्यां सुखदुःखात्मिका । यदिति पदात् दुःखं च लोकविलक्षण
स्वरूपात्मकत्वात् कोटिकोट्यानन्दरूपं युगपत्सर्वलीलानुभावकं भगवदाविर्भावकम्, अतो निरोधस्य
प्रथमांशो दुःखं प्रपञ्चविस्मृतेर्भगवदर्थदुःखजन्यत्वात् । अतो मूलभूतत्वादन्त्येप्यस्यैव फलत्वादस्य
हितत्वेन प्रथमतो दुःखं प्रार्थयन्ति 'यच्च दुःख'मिति । यद् दुःखं यशोदाया नन्दादीनां चकारादन्येषां
गोकुले अस्ति तद्दुःखं मम क्वचिदपि स्यादिति सम्बन्धः । नन्वेतत्सर्वं निरोधस्य फलत्वे, तदेव दुःखं न,
सुखस्याग्रिमस्यैव तत्कार्यसम्भवादिति चेत् । न, अनाकलनात् । 'मानसी सा परा मता' 'चेतस्तत्प्रवण
सेवे'त्यादिभिः सिद्धान्तमुक्तावल्यामाचार्यैर्निरोधपदार्थस्यैव फलरूपसेवात्वेनोक्तत्वात्, अतो न काचि-
च्छङ्केति भावः । मातृचरणदुःखस्य लीलाभावतोऽधिकत्वात् प्रथमोक्तिः । ननु पूर्वोक्तेदेन भगवदानन्दनिधि
प्राप्ता किं क्लिष्टा एवेति चेत् । अत्रायं भावः । भगवति मथुरां प्रति प्रस्थिते, तत आरभ्य मातृचरणादी
नां स्वरूपात्मकविप्रयोगदानेन ते क्लिष्टा एव, परं स महारसो विलक्षणानन्दः । फलत्वेनमेन
पर्यवसितिर्यदैवमानन्दानुभवः, अतस्तन्मनोरथं कुर्वन्ति 'स्यान्मम क्वचि'दिति ॥ १ ॥ एवं यशोदादिदुःख
प्रार्थयित्वा अतिदुरापं गोपिकादुःखं प्रार्थयन्ति 'गोपिकानां चे'ति । तुशब्दः पूर्वस्माद्वैलक्षण्यप्रदर्शकः ।
गोपिकानां भजसीमन्तिनीनां यत् श्रीभागवतादौ निरतिशयत्वेन प्रसिद्धं स्वरूपात्मकं तत् क्वचिदपि
देहेन्द्रियप्राणेषु स्यादिति मनोरथः । यशोदानन्दादीनामेतद्दुःखस्य स्वस्य रामश्रीभावपूरितविग्रहत्वेन
अयोग्यतया अप्रार्थनीयत्वाद् गोपिकादीनामेव दुःखांशं प्रार्थयन्ति 'गोकुले गोपिकानां चे'ति ।
गोकुले भगवतो लीलाभिर्वेणुनादादिरूपाभिर्गोपिकानां, चकाराद्गोपानां सर्वेषां व्रजवासिनां चापि
यद्दुःखमनुभूयमानलीलारसस्य सम्पादकमभूत्, तत् किं मे भविष्यति । अन्यत्र तथाकरणे सामर्थ्या
भावमाशङ्क्याहुः 'भगवा'निति । स हि सर्वं कर्तुं समर्थः । अतोऽन्यत्रापि तथा करिष्यत्येवेत्यर्थः ॥ २ ॥
एवं दुःखं प्रार्थयित्वा लीलाभिर्यत्सुखं तदपि प्रार्थयित्वा आत्यन्तिकविप्रयोगदानानन्तरं यत्सुखं
तदपि प्रार्थयन्ति, उद्धवागमन इति । उद्धवस्यागमने जाते यथा गोपिकानां मनसि भगवत्ताकट्य

उपतपतो जनान् दृष्ट्वा यदा कृपायुक्तो भवेत् तदा सर्व सर्वात्मक सदानन्द पर ब्रह्म हृदिस्थ परमव्योम्नि प्रादुर्भूत बहि प्रकट भवतीत्यर्थ । अत एव व्रजसीमन्तिनीना गुणगानेन हृदि प्रादुर्भूय तन्मनस्का इत्यादिना तथाभावसम्पत्तौ कृपया भगवान् प्रादुर्भूत इत्युच्यते । तदेवोक्तमाचार्यै 'नहि साधनसम्पत्त्या हरिस्तुष्यति कस्यचित्, भक्ताना दैन्यमेवैक हरितोषणसाधन'मिति । यद्वा, सदानन्दस्य भगवतो हृदिस्थ अभिप्रायादिक बहिर्निर्गत भवतीत्यर्थ । अत्रायमभिसन्धि । 'हन्त सुस्वर राज'नित्यादिना तादृशभावे यदा कृपायुक्तो जातस्तदा भगवतोभिप्राय प्रभुणैव मया परोक्ष भजता, न पारयेह निरवद्यसयुजामित्यादिनाविर्भावित इति तथेत्यर्थ ॥ ७ ॥ ननु किमिति कृपापेक्षया गुणगानेन क्लेश सम्पादनीय, ज्ञाननिष्ठया ब्रह्मानन्द एव सम्पाद्यतामिति चेत्, तत्राहु 'सर्वानन्दमयस्यापी'ति । एतस्यैवानन्दस्यान्यानि भूतानीति श्रुते सर्वत्र स्थितो य आनन्द स भगवति प्राचुर्येण वर्तत इति तदाश्रितस्य मानुषानन्दमारभ्य ब्रह्मानन्दो न कस्यापि दुर्लभत्वम्, 'सर्व मद्भक्तियोगेने'ति वाक्यात्, तथापि कृपानन्द कृपारूपो य आनन्द स भगवद्धर्मिणो स्वरूपसमानयोगक्षेमत्वात् कृपया वा यो भजनानन्दाख्य स तु सुतरा दुर्लभ एव । ब्रह्मानन्दस्यापि दुर्लभत्वात् । सम्भवति साधनमिह किञ्चिदिति चेत्? गुणगानमेवेति गृहाण । अत एवोक्तमाचार्यै 'लौकिकत्वेपु सलिद्ध तद्द्वारा पुरचे भवेत् । स्वानन्दस्थापनार्थं हि योग्यतापि निरूपिता । अतो हि भजनानन्द स्त्रीपु सम्यग् विचार्यत' इति । एतदर्थस्तु प्रभुचरणैव विवृत । 'भजनानन्दस्य स्वरूपात्मकत्वेन रसरूपत्वात् तस्य च स्वशास्त्रसिद्धस्यैव तथात्वात् भावव्यतिरिक्तलोके विवाहयतीपु सम्यक्सिद्धो भवति । तत् एतत्कथाश्रवणेन तद्भावोदये पुरुषेपि स रसो भवेत्, भाव्यवेति स्त्रीष्वेव तद्गानमित्यर्थ इति । तत्रैव द्वितीयकारिकार्थनिरूपणे यद्वा, वसुदेवे सधर्माम् निरूपयता भगवता 'गोप्योन्तरेण भुजयोरपि यत्स्पृहा श्री रिति वाक्ये श्रियोपि स्पृहानिरूपणेन तस्या अपि दुर्लभो यो रस त प्राप्य गोप्यो धन्या इति व्रजस्त्रीष्वेव स्वानन्दानुभवयोग्यता निरूपिता, अन्येषु नाप्याप्तु ये त्यर्थ । तया च तत्रैवैतदधिकारित्वात् सयेति भाव इत्येतत्सर्वं हृदिकृत्योक्त कृपानन्द सुदुर्लभ इति । 'माय सुखाय' 'नेम विरञ्च' 'एता पर' 'केमा स्त्रिय, नाय श्रिय' 'आसामहो' इत्यादिवाक्यै श्रीभागवतेपि तस्य तथात्वनिरूपणाच्च । कृपानन्दस्य दुर्लभत्वबोधक तत्कार्यमाहु 'हृद्गत' इति । हृद्गत हृदयमविष्ट स्वगुणान् श्रुत्वा पूर्ण गुणगानेन प्रतिक्षण वर्धमान. जनान् प्लावयते रससिन्धौ निमज्जयतीत्यर्थ । अत एव 'बर्हापीडे'ति पद्ये स्वामिनीना सुधाद्वारा भावात्मक. प्रभुरन्त प्रविष्टो 'भक्तवता'मित्यादिनिसद्वर्णितगुणश्रवणेन पूर्ण श्रीदामघतामेव सम्पादितवान् । अत एवोक्त श्रीमदाचार्यैर्युगलगीते 'अन्त प्रविष्टो भगवान् मुखादुत्थस्य कर्णयो, पुन प्रवेश्यते सम्यक् तदा भवति सुस्थिर'इति । एतद्विवरणे यथार्थलक्षणास्माभिरुक्त इति सर्वमनवद्यम् ॥ ८ ॥ एव सोपपत्तिक गुणगान तत्स्वरूपम् निरूप्य कर्तव्यत्वेन तदुपसहरन्ति 'तस्मा'दिति । यस्मात्कर्मज्ञानोपासनादिमार्गतो भक्तिमार्गो निरतिशयितनिजविषय 'नैष्कर्म्यमपि पूजादिना ब्रह्मलोक'मित्यादिवाक्यात् तस्माद्धेतो सर्व कर्मज्ञानोपासनादिक परित्यज्य सवासन त्यक्त्वा नित्यैर्भगवता स्वीयत्वेन वृतैरत एव किञ्चिदिच्छतमपरैर्भक्तरर्थ साधनानि विदधद्भिर्गुणा एव सर्वदा सर्वैर्दासारतान्कर्तव्यत्वेन गेया इत्यर्थ । ननु वेदमार्गानुसारेणेति वाक्यात् तन्मार्गस्य व्याख्यातृभिर्बहुविधत्वात् केवल स्वगुणान् गायेदिति शङ्कायामाहु सदानन्दपरैरिति । सदानन्द. आनन्दमय पर परमात्मा परमकाष्ठापन्नो न तु पुष्ट्यादि येषा तादृशैरित्यर्थः । विधया विशेषणमेतत् । अनेन ब्रह्मवादे स्थित्वा गुणगान कर्तव्यमित्युक्त भवति । तत तेभ्य एव गुणेभ्यो जीवस्य सच्चिदानन्दता गुणत्रयाविर्भावेन अक्षररूपतया पुरुषोत्तमाविर्भावयोग्यता भवतीत्यर्थः । स्वत इति पाठे गुणगाने क्रियमाणे स्वत एव तदनुभावात्तथात्वम्, न तु तदर्थं प्रयत्नान्तरापेक्षेति तथेत्यर्थ ॥ ९ ॥ एव गुणगानकर्तव्यतामभिधाय निरोधलक्षणलीलयैव तत्सिद्धिरिति स्वस्य स्वीमार्गमेव निरोधविमुक्तिकर्तृत्वमिति वदन्त तस्य चकारव्यभिचारिताज्ञानाय दृष्टान्त निरूपयन्तस्तत्र स्वानुभव प्रमाणयन्ति, अहं निरुद्ध इति । अह निरोधेन स्वरूप एवादि आहुर्गोति तादृशेन गुणेन

तयेत्यर्थः । अयमर्थः । गुणाविष्टचित्तानां सर्वत्र संसारेण अहन्ताममतारूपेण अभिलषितप्राप्तितदभावाभ्यां यः क्लेशः यश्च संसाराभावेन भगवत्यपि तदभावेन भवति सोपि तथेत्यर्थः । भगवद्विषयकसंसारस्य सतामप्यपेक्षणीयत्वात् । अत एव 'कुर्वन्ति गोवत्सपदं' मित्यग्रस्थस्य गोवत्सपदमात्रकरणोक्त्या अहमेतद्दासोऽयं मम स्वामीत्येतावान् संसारः स्थापितो भवतीति निरूपितमाचार्यैः । स च क्लेशः 'क्लेशोऽधिकतरस्तेषां' मित्यादिना भगवता गीतायामेव वर्णितः ॥ १३ ॥ ननु गुणाविष्टचित्तत्वेप्यनिष्टनिवृत्तिरेव किमित्याशङ्कायामाहुः 'हरेश्च सुखं'मिति । हरेः सर्वेदुःखहर्तुर्भगवतो यथा सर्वदैव भक्तसाहित्येन सुखं पूर्णानन्दत्वाद्भगवतस्तथा गुणाविष्टचित्तत्वेऽन्तस्तदाविर्भावाद्भगवत्साहित्येन तथैव सुखमित्यर्थः । 'सदा सत्सङ्गयुक्तानामवस्थैव यदा भवेत् । तदा दयालुता दैन्यदर्शनात्तु हरेर्भवे' दित्याशयेनाहुः तदा भवेद् दयालुत्वमिति । अन्यथेति । एवं भावाभावे भगवतोपि क्रूरता अकृपालुता अनपेक्षकत्वेन मतास्माकं सम्मतेत्यर्थः । अत एव नैवात्मन इति श्लोके भगवत आत्मनः प्रभोर्निजलाभपूर्णस्य अविज्ञजनोपकृतोऽपराग्रहीतुः करुणया किङ्करनिवेदितानुग्राहकत्वमुच्यते श्रीभागवते । सा च पूर्वोक्तभावे नैव भवतीति सर्वमनवद्यम् । ननु कालकर्मस्वभावादिभिर्बुद्धिनाशवैयर्थ्योद्वेगादिदोषसम्भवे कथं गुणगानानिर्वाह इति चेत्, तत्राहुः बाधशङ्कापि नास्त्यत्रेति । अत्र गुणगाने कालादिबाधशङ्कैव न, यतो भगवतैवोक्तं श्रीभागवते 'न कर्हिचिन्मत्पराः शान्तरूपे नङ्क्ष्यन्ति नो निमिषो लेढि हेति'रिति । किञ्च । नाम्न भागवतापि बाधः कर्तुं शक्यः, तत्र के वराकाः कालादय इत्यर्थः । अत एवोक्तमाचार्यैः 'हरिरत्र न शक्नोति कर्तुं बाधां कुतोपरे' इति । ननु सर्वकर्तृसमर्थस्य भगवतः कथमेतन्नामबाधकत्वसमर्थत्वमिति चेत्, सत्यम्, परन्तु सर्वस्य वशीति श्रुत्या सर्ववश्यस्य भगवतो भक्तवश्यत्वेन सर्वसमर्थस्य भक्तभाववाधासमर्थत्वमिति भावः । एवमनिष्टनिवृत्तिमुक्त्वा इष्टप्राप्तिमाहुः तदध्यासोपि सिध्यतीति । गुणगानेन तस्य भगवतः अध्यासः सर्वत्रावभासः सोप्यवान्तरफलतया सम्यक् सिद्धिविषयो भवतीत्यर्थः । अध्यासपदं घटादिषु तदवभासस्य भावप्राप्तयुक्त्येन वस्तुतः आसक्तिभ्रमबोधनाय । अन्यथा घटादेः पुरुषोत्तमाभिन्नत्वं स्यात्, नहि घटादि साक्षात्तदभिन्नं, किन्तु परम्परया । तस्याक्षरात्मतया तद्द्वारा तथात्वात्, अन्यथा तावद्धर्मविशिष्टत्वं तेष्वप्यभिदध्यात् । ननूच्यन्त एव ब्रह्मधर्माः सच्चिदानन्दादयस्तेष्विति चेत्, अक्षरगतानामेव तेषां तद्वृत्तितया व्यपदिश्यमानत्वात् । अन्यथा वह्नीपीडत्वादयोपि व्यपदिश्येरन् । न च इष्टापत्तिः । तदसाधारणधर्माणामन्यत्र कथनस्यानुचितत्वात् । किञ्च, सर्वेषां धर्माणां साधारण्ये तद्गतासाधारणधर्माभावे लक्षणाभावादनिरूप्यत्वं जीवसमत्वमभजनीयत्वं च स्यात् । तस्मादभेदस्याक्षरसमानाधिकरणत्वेन तद्धर्मव्यपदेश एव, न पुरुषोत्तमधर्मगन्धोपीति मुक्तमस्य । नन्वैश्वर्यादयो व्यपदिष्टा एव, किं न ते पुरुषोत्तमधर्मा इति चेत्, सत्यम्, तद्धर्मा एव, परन्त्वक्षरस्य चरणरूपत्वेन तदभिन्नतया तेषां तत्र सद्भावात् । यतो व्यासादिष्वपि तदिच्छया तद्भावः, मुक्ता भगं स्वैरिति वाक्यात् । एवं सति 'उत्तमः पुरुषस्त्वन्यः' 'भेदव्यपदेशाच्चे'त्यादिस्मृतिसूत्रमीमांसया अक्षराभेदः पुरुषोत्तमभेद इति भेदाभेदवादोऽस्माकमिति दिक् ॥ १४ ॥ ननु वैराग्यस्य गुणगानाङ्गत्वेन तदभावे अङ्गहीनत्वेन न सफलत्वमित्याशङ्क्य तद्गानेनैव भवतीति साधनसम्पादकरूपमुत्कर्षमाहुः भगवद्धर्मसामर्थ्यादिति । भगवद्धर्मा गुणगानं तत्सामर्थ्यादुत्पन्नतेरेव विषये भगवद्व्यतिरिक्तविषये विरागो रागाभावः स्थिरः, अन्यापरिभाव्यो भवतीत्यर्थः । 'सा श्रद्धधानस्य विवर्धमाना विरतिमन्यत्र करोति पुंसः' इति वाक्यात् । यद्वा, भगवद्धर्मा भगवल्लीलादयः, तत्सामर्थ्यादेव तात्स्वभाव्यादेव विरक्तो भवतीत्यर्थः । अत एवोक्तमिदं भूलगुणो हरिरिति ॥ १५ ॥ एवं सोपपत्तिकं गुणगानकर्तव्यतामभिधाय तदुपसंहरन्ति एष ज्ञात्वेति । एवं पूर्वोक्तेन प्रकारेण ज्ञानमार्गात् गुणवर्णने उत्कर्षं ज्ञात्वा सर्वापेक्षां परित्यज्य सदा कालाव्यवधानेन गुणा एव वर्णनीयाः । अत्र बाधकद्वयं त्यागार्थमाहुः अमत्सरैरलुब्धैरिति । मात्सर्यलोभयोरत्यन्तबाधकत्वात् त्याज्यत्वम्, निर्मत्सराणां सतामिति वाक्यात् ॥ १६ ॥ ननु गुणगानं रागतानादिवशीकृतचित्ततया कार्यं इत्याशय तापक्लेशैर्गुणगानस्य

## लालूभट्टकृत 'निर्णयार्णवा'न्तर्गतैतद्ग्रन्थसंशयनिरासः ।

संसारावेशदुष्टानामिन्द्रियाणां हिताय वै । कृष्णस्य सर्ववस्तूनि भूम्न ईशस्य योजये'दिति । कृष्णस्य सर्ववस्तूनि कृष्णसंबन्धिरूपरसादीनि विषयरूपाणि इन्द्रियाणां हिताय योजयेत् । भगवद्रूपादौ चक्षुरादीनां विनियोगः कार्यो, न त्वन्यत्रेति फलितोऽर्थः । ननु जीवानां नानादेशस्थानां भगवद्रूपादिदर्शनाभावात्कथं विनियोगः स्यादित्याशङ्क्याहु 'भूम्न' इति । व्यापकस्येत्यर्थः । ननु व्यापकत्वेऽपि तिरोहितत्वाद्दौर्लभ्यं दुर्निवारमित्याशङ्क्याहु 'ईशस्ये'ति । सर्वत्र सर्वरूपेण सर्वकरणसमर्थस्येत्यर्थः । एवं सति मूर्त्यादिरूपेण प्रकटस्य साक्षाद्भगवत्त्वात्तत्र चक्षुरादिविनियोगस्य सौकर्यमिति कृतार्थता सिद्ध्यैवेति सामर्थ्यसूचकमीशपदम् ।

अत्रैव—हरिमूर्तिः सदा ध्येयेत्यादि । ध्येयेति । अनेनाऽन्तःकरणस्य भगवदुपयोग उक्तः । दर्शनं स्पर्शनमिति चक्षुस्त्वचोः । तथा कृतिगती इति करपादयोः । श्रवणं कीर्तनं स्पष्टमिति श्रोत्रवाचोः । पुत्रे कृष्णप्रिये रतिरिति । कृष्णः प्रियो यस्य कृष्णस्य प्रिय इति वा विग्रहेण भगवद्भक्त इत्यर्थः । कृष्णप्रिये पुत्रे इत्यत्र 'निमित्तात्कर्मयोगे' इति सूत्रेण सप्तमी । रतिरिति कर्मपदम् । अध्याहृतेन कर्तव्येति पदेन कर्मणोऽभिधानादभिहिते रतिरूपे कर्मणि प्रथमा । प्रथमान्तेन कर्मवाचकरतिपदेन योगात्पुत्रे कृष्णप्रिये इत्यत्र निमित्तसप्तमी । तथा च कृष्णप्रियपुत्रार्थं रतिः कर्तव्येत्यर्थो भवति । अनेन व्यवायेन्द्रियस्य परम्परया भगवत्सेवोपयोगो निरूपितः । भगवद्भक्तः पुत्र उत्पत्स्यत इति बुद्ध्या भोगः कार्यो, न त्वन्यथेति भावः । पुत्रपदेन स्वभार्यायामेव ऋतावेव भोगः कार्यो, न स्वाच्छन्द्येनेत्युक्तम् । पाय्वोरिति । तद्द्वारा मलत्यागो देहः शुद्धो भगवत्सेवायामुपयोक्ष्यत इति पाय्वोः परम्परयोपयोगो ज्ञेय । यस्य चेति । अन्तःकरणबहिःकरणानां मध्ये यस्य चक्षुरादेर्यदा यस्मिन् समये भगवत्कार्यविनियोगो न दृश्यते, तदा, तस्मिन् समये तस्य विनिग्रहः कर्तव्यो, न तु भगवदितरपदार्थे विनियोग इत्यर्थः । केचिदत्र 'यस्य वा भगवत्कार्यं मिलनैन व्यवायेन्द्रियमात्रस्य निग्रह उक्त' इत्याहु । तन्न । यस्य यदा तस्य तदेत्युक्तयोर्यत्तच्छब्दयोर्वैयर्थ्यापत्तेः । अतः साक्षात्परम्परया वा यथाकथञ्चिदपि भगवद्विनियोगः स्यात्तदेन्द्रियाणि विनियोजयितव्यान्यन्यथा तु सर्वस्यैवेन्द्रियगणस्य निग्रहः कार्य इत्येवाचार्यचरणानामाशयो, न तु केवलं व्यवायेन्द्रियमात्रनिग्रहे तात्पर्यमिति ज्ञातव्यम् ।

ननु निरोधलक्षणग्रन्थे 'यच्च दुःखं यशोदाया' इत्यादिना श्रीमदाचार्यचरणैर्भगवद्विरहात्मिकं दुःखादि स्वयं ध्वनितमेतावता निरोधस्य किं लक्षणं सिद्धमिति चेत् । शृणुत । भगवद्विरहे दुःखं [1] च भगवत्सयोगे परमाह्लादश्चेत्यादि कार्यं निरोधजन्यमेव । यतो निरुद्धानामेव भगवद्विरहे दुःखं श्रूयते । संयोगे महानानन्दश्च । 'गोपीनां परमानन्द आसीद्गोविन्ददर्शने । क्षणं युगशतमिव यासां येन विनाऽभव'दिति वाक्यात् । एवं सति तादृशदुःखादेर्निरोधकार्यत्वात्कार्यलक्षणमत्र सुखसाध्यमित्यावश्य । भगवद्विरहसामयिकपरमदुःखकारणत्वं निरोधत्वं भगवत्संयोगसामयिकपरमानन्दसाधकत्वं निरोधत्वमित्यादिलक्षणानि निरोधस्य सिध्यन्ति । निरोधस्य निबन्धसुबोधिन्योर्बहुधा निरूपितस्य परस्परविरुद्धतया प्रतीयमानलक्षणस्य सम्यग्विरोधप्रकारो मया सुबोधिनीयोजनायां विवृत इति विशेषजिज्ञासायां ततोऽवधेयम् ।

---

[1] एतदन्ते मुद्रितम् ।

# लालूभट्टकृतनिरोधस्वरूपनिरूपणं श्रीदशमस्कन्धसुबोधिनीयोजनान्तर्गतम् ।

श्रीगोवर्धनधारी तनोतु मङ्गलानि ।

श्रीगोवर्धनधारिणं शुभकरं शृङ्गारमूर्तिं भजे । वन्दे नन्दपुराणपुण्यफलितं श्रीबालकृष्णं प्रभुम्
श्रीमद्वल्लभविठ्ठलेश्वरविभू ध्यायामि सद्बुद्धितौ । कुर्वे तत्कृपया निरोधविवृतौ सन्देहविध्वंसनम् ॥

अथ निरोधस्य स्कन्धार्थत्वात् प्रथमं तत्स्वरूपं विचार्यते । तत्र 'निरोधोऽस्यानुशयनमात्मनः सह शक्तिभि'रिति वाक्यादात्मनः पुरुषोत्तमस्य शक्तिभिरनुशयनं निरोधः । आत्मपदान्निर्गुणं परं ब्रह्म ग्राह्यम् । 'गौणश्चेदात्मशब्दादि'त्यात्मशब्दस्य परवाचकताया निर्धारितत्वात् । तत्र 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः, तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयत' इति श्रुतेः, 'कृष्णस्तु भगवान्स्वय'मित्यादिवाक्याच्च परमात्मत्वं कृष्णस्य सिद्धम् । अतः कृष्णस्य अनुशयनं निरोधः । अनुशयनं नाम लीलानुरूपा स्थितिः । 'विष्णुः सर्वगुहाशय' इत्यादौ शीङ्धातोः स्थित्यर्थकत्वात् । 'न हि गुहायां शेते' इति व्युत्पन्नेन गुहाशयशब्देन निद्राशीलत्वार्थः शेरते, निद्रया अविद्यावृतत्वात् । अतः शीङ्धातोर्लक्ष्या स्थितिरत्रार्थः । एवं सति शक्तिभिः सह भगवतः स्थितिः शयनं, अनुरूपत्वमुपसर्गार्थः । कस्मानुरूपेत्याकांक्षायां स्थितेर्लीलाप्रयोजनकत्वाल्लीलानुरूपेति बोध्यम् । एवं च कृष्णस्य लीलानुरूपा स्थितिरनुशयनमिति सिद्धम् । स्थितिरपि लीलाविशेषोऽनेकविधलीलासाधकः । अतः सर्वलीलासाधिका स्थितिरूपा लीला निरोधपदार्थो भगवद्धर्मः, स च प्रपञ्चमध्य एव स्फुटः । कृष्णावतारस्य प्रपञ्च एव जातत्वात् । तदुक्तं निबन्धे 'स एव कदाचिज्जगदुद्धारार्थं अखण्डः पूर्ण एव प्रादुर्भूतः कृष्ण इत्युच्यत' इति । अतोऽनेकशक्तिभिः सह कृष्णस्य प्रपञ्चे क्रीडा निरोध इति फलितम् । एतदुक्तं सुबोधिन्यां 'निरोधोऽस्यानुशयनं प्रपञ्चे क्रीडनं हरेः । शक्तिभिर्दुर्विभाव्याभिः कृष्णस्येति हि लक्षण'मिति । इह कारिकायां कृष्णस्येतिपदं मूलस्यात्मपदव्याख्यानरूपम्, आचार्यमते कृष्णस्यैवात्मरूपत्वात् । अत एवावतारान्तरलीलायां स्कन्धान्तरप्रतिपाद्यायां नातिव्याप्तिरिति भावः । एवं निरोधशब्दोऽनुशयने रूढ इत्युक्तम् । किञ्च, प्रपञ्चविस्मृतिपूर्विका भगवदासक्तिर्निरोधः, नितरां रोधो निरोध इति व्युत्पत्तेः । रोधः कस्येत्यपेक्षायां भक्तानामिति पूर्वस्कन्धार्थसमस्या लभ्यते, कस्माद्रोध इत्यपादानापेक्षायां प्रपञ्चो भावः । तथा सति प्रपञ्चाद्रोध इति सिध्यति वा । प्रपञ्चाद्रोधेऽपि 'कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् । इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यत' इतिवत्प्रपञ्चस्मरणं चेत्तदा भगवल्लीलानुभवे गुरुत्वाधिकारो न स्यात्, अतः प्रपञ्चविस्मरणमपेक्षितम्, तदुपसर्गेण लभ्यते, नितरां रोधः प्रपञ्चविस्मरणपूर्वकः स निरोध इति । कस्मिन्निरोध इत्यपेक्षायां भगवति निरोध इति ज्ञेयम् । स हि परमसुखोत्पादकलीलाजन्यत्वेन परमसुखरूपत्वादासक्तिरूपो भवितुमर्हति । एवं यौगिकव्युत्पत्त्या प्रपञ्चविस्मृतिपूर्विका भगवदासक्तिर्निरोध इति फलितम् । 'या तु व्यसनसंप्राप्तिर्निरोधः स तु कथ्यत' इति भरताचार्यवाक्ये व्यसनपदवाच्याया आसक्तेरेव निरोधत्वकथनाच्च । सा च 'इति नन्दादयो गोपाः कृष्णरामकथां मुदा, कुर्वन्तो रममाणाश्च नाविन्दन् भववेदना'मित्यत्र स्फुटमभिहितम् । 'शय्यासनाटनालापक्रीडास्नानाशनादिषु, न विदुः सन्तमात्मानं वृष्णयः कृष्णदेवता' इत्यत्र च स्फुटमभिहिता । एवमुभयं निरोधपदवाच्यम् । 'समुदायो अन्यवाची क्रीडायुक्तस्य वै हरेः । प्रपञ्चविस्मृतिः सक्तिर्भक्तानां चापि योगत' इति निबन्धात् । निरोधशब्दस्य यौगिकत्वपक्षे भक्तकर्मकनिरोधवत् भगवत्कर्मको निरोधो गोप्यतया विवक्षितः । यथा भगवता लीलाभिर्निरुद्धा भक्ता भगवद्वशे भवन्ति, एवं पुष्टिभक्तैर्लीलाभिर्निरुद्धो भगवान् भक्तवश्यो भवति । अत एव भगवतो भक्तेतरविषयकज्ञानाभावः स्वस्मिन्प्रदर्शितो 'नाहं तेभ्यो मनागपी'त्यनेन । इममर्थं सूचयितुं स्वहृदयशोधे भगवतः शयनमाचार्यैरुक्तं 'नमामि हृदये शेषे' इत्यनेन । 'अन्यत्र गतिरहितो य' इति टिप्पण्यां व्याख्यातं च । अन्यच्च 'आभासश्च निरोधश्च यतश्चाध्यवसीयते, स आश्रयः परं ब्रह्म परमात्मेति शब्द्यत' इत्यादौ प्रलयो निरो-

धपदवाच्य । स च प्रपञ्चप्रतियोगिक । एवं च सुबोधिन्युक्त्या टिप्पण्युत्पादितया पूर्वोत्तरस्कन्धार्थसङ्गत्या नवमदशमार्थसङ्गतिविचारे भक्तानां प्रपञ्चप्रलयो निरोध इत्यायाति । अत एव द्वितीयस्कन्धसुबोधिन्यां 'भक्तानां प्रपञ्चाभावो निरोध' इत्युक्त इहैव सुबोधिन्याम् । अतो 'निरोधो भक्तानां प्रपञ्चस्येति निश्चय' इत्यभाणि । तथा च भक्तानां प्रपञ्चस्य प्रलयस्तिरोधानं नित्यलीलौपयिकदेहत्वफलको जाड्यात्मकप्रपञ्चभावाल्लय इति यावत् । तदुक्तं सुबोधिन्यां 'अतो निरोधो भक्तानां प्रपञ्चस्येति निश्चय' इति । सूतोक्तलक्षणेषु निरोधस्थाने संस्था पठिता, संस्था च 'नैमित्तिक प्राकृतिको नित्य आत्यन्तिको लय । 'संस्थेति कविभि प्रोक्तश्चतुर्धास्य स्वभावत' इत्यनेन प्रलयरूपा व्याख्याता । अतो निरोधशब्देन प्रलय उच्यते, 'निरोधोऽस्यानुशयन'मित्यस्य सुबोधिन्यामपि शक्ती शाययित्वा तद्योगार्थं भगवत शयनमिति व्याख्यातम् । तत्रापि शक्तिशयनानन्तरं शयनकथनेन प्रलय उक्त । अतो भक्तप्रपञ्चसम्पादिका शक्ती स्वस्वरूपे तिरोहिता कृत्वा तिष्ठति, ततो भक्तान् प्रति प्रपञ्चस्तिरोभवति, अतो भक्तानां प्रपञ्चनिवृत्तिरिति सिध्यति । एतदभिसन्धायोक्तमत्र 'एष सर्वगतो विष्णु प्रकटश्चेत्तद्विशेत्, तावत्स लीयते सर्वमिति कृष्णसमुद्यम' इति । इदमत्र ज्ञेयम् । स्वच्छन्दलीलाभिर्भगवांस्तिरोध्य भक्तानां देहादितत्फलमपञ्चे स्वानन्दं प्रवेशयन् तिरोहितानन्दमथाविर्भावयति, ततो भगवदानन्दानुभवयोग्यालौकिकदेहत्वप्राप्तौ जाड्यादिरूपपूर्वप्रपञ्चभावो लीयते, अयमेव प्रलयपदार्थ । अतो भक्तानां प्रपञ्चप्रलयो निरोध इति फलति स्म । तथा च प्रपञ्चे शक्तिभिर्भगवत्क्रीडनं भक्तानां प्रपञ्चविस्मृतिपूर्विका भगवदासक्तिर्भक्तानां प्रपञ्चाभावश्चेति त्रय निरोधपदवाच्यम् । तत्र भगवत्क्रीडनं करणं, भगवदासक्तिर्व्यापार , भक्तानां प्रपञ्चाभाव फलमिति त्रितयरूपो निरोध स्कन्धार्थ । एवमत्रैव सिद्धम् । भगवाननेकशक्तिभि करणरूपनिरोधात्मिका क्रीडां कुर्वन् प्रपञ्चविस्मृतिपूर्वकासक्तिरूपनिरोधात्मकव्यापारेण प्रपञ्चाभावरूपफलात्मकनिरोध सेवकानां सम्पादयतीति त्रिष्वपि निरोधपदव्यवहार सुबोधिनीटिप्पण्यादिषूपलभ्यत इति सर्वमदुष्टम् । किञ्च, 'लौकिकेषु तु भावेषु यत्रैव हरिवेशनम् । निवर्तते तदेवात्र वह्नेर्दारुमय यथे'ति कारिकायां फलात्मको निरोध उक्त । तथाहि, लौकिकेषु भावेषु पदार्थेषु यत्र यत्र भगवान् प्रविशति, तत्र तत्र चिदानन्दयोस्तिरोभूतयोराविर्भावात्तदेव पूर्वस्थितस्वरूपं तिरोहितानन्दकं निवर्तते, ब्रह्मात्मकं भवति, प्रकटसच्चिदानन्दकं भवतीति यावत्, तत्र दृष्टान्त , वह्नेरित्यादि । वह्निप्रवेशे दारुणो वह्निरूपता तद्वदित्यर्थ । एवं भक्तानां प्रपञ्चप्रलयो बोध्य । अन्यच्च, शक्तिशयनानन्तरशयनवाचके अनुशयनशब्दे शोभ्योर्योगोऽपि विवक्षित , तदनुसारेण स्कन्धारम्भे स्कन्धार्थरूपं भगवत प्रमस्वप्नं श्रीमदाचार्यचरणैर्लीलाक्षीराब्धिशायिन लक्ष्मीसहस्रलीलाभि सेव्यमान कलानिधिभिरुक्त्या रहस्यलीलायां निरोधपदवाच्यत्वं सूचितम् । तदनुसारेण प्रभुचरणैष्टिप्पण्यां 'अनुशय्यते अनेने तिकरणव्युत्पत्तिं प्रदर्श्य निगूढभावकरणं येन स निरोध इत्युक्त्वा स्वकीयेषु स्वविषयकभावोत्पादनं यया लीलया क्रियते, सा निरोधपदवाच्येत्युक्तवद्भिर्गुप्तलीलाया स्कन्धार्थता प्रतिपादितेति विद्वद्भिर्विभावनीयम् । एवञ्च, श्रीशुकोक्तिसुबोधिनीटिप्पणीषु सर्वत्राविरोध इत्येक एवार्थोऽपत्रयाणां प्रादुर्भवति स्म । तथा सर्वाद सिद्धम् । देहादौ चिदानन्दयोः प्राकट्येन जाड्यादिप्रपञ्चभावप्रलय एकरूपो निरोध सिद्धः । तस्मिन् सति प्रपञ्चे विद्यमानानामपि भक्तानां कृष्णानन्दानुभवयोग्यदेहत्वं सिध्यति । इदमेव प्रभुपादैः 'प्रभो तव सन्निधौ तनुतन्त्रमेतावते' त्यनेन प्रार्थितं, ततो नित्यलीलाप्रवेशः स मुक्तिपदवाच्यः, निरोधलीलायां भक्तानां साधारणमायागुणरहितत्वेऽपि लीलास्थभक्तनिष्ठप्रकाण्डगुणमायागुणसम्बन्धेन लौकिकसादृश्यव्यवहारः पुराणादौ, तेषां प्रभावद्वयोगमायागुणनिवृत्तौ नित्यलीलाप्रवेशरूपा मुक्तिः, अतो मुक्तिर्लीलायां गुणनिर्गुणत्वमिति विवेक । 'मुक्तिर्हित्वान्यथारूप' इति वाक्यात् । गुणान्यथात्वाभावादिति वावात् ।

श्रीमद्-वल्लभाचार्य-महाप्रभु-विरचित-षोडश-ग्रन्थान्तर्गतम्-अन्तिमम्

# सेवाफलम्

सविवरणम्

चतुर्दशटीकाभिस्समलंकृतम्

१. श्रीकल्याणरायाणाम्
२. चाचा श्रीगोपेशानाम्
३. श्रीदेवकीनन्दनानाम्
४. श्रीहरिरायाणाम्
५. श्रीवल्लभानाम्
६. श्रीपुरुषोत्तमानाम्
७. श्रीद्वारकेशानाम्
८. श्रीलालूभट्टानाम्
९. श्रीजयगोपालभट्टानाम्
१०. श्रीलक्ष्मणभट्टानाम्
११. श्रीगोकुलनाथानाम्
१२. केषाञ्चित्
१३. केषाञ्चित्
१४. श्रीव्रजभूषणानाम्

श्रीमद्-वल्लभाचार्य-महाप्रभु-वंशावतंस-गोस्वामिश्री-१००८
श्रीगोविन्दराय-महाराजश्रीत्येतैः-प्रकाशितम्

श्रीवल्लभाब्द : ५०३

वि. सं. २०३७



गोस्वामिश्री १००८ श्रीरणछोडलालजी महाराज

॥ श्रीकृष्णाय नमः ॥

॥ श्रीमदाचार्यचरणकमलेभ्यो नमः ॥

# ग्रन्थ-परिचय

फल और उसके विवरण की रचना श्रीमहाप्रभुने आगरामे विष्णुदास छीपाके लिए
कंवदन्तीके अनुसार इसका रचनाकाल वि. स. १५८२ माना जाता हैं.[1] वार्ता
एक उल्लेख यो मिलता है :

आगरेके पासके गाममे एक छीपाके घरमें प्रकटे. सो बडे भये, बीस वर्षके, तब
ते. सो पिता वस्त्र छाप देय विष्णुदास आगरेमे जाई बेच लावें. सो ऐसे करत एक
आचार्यजी आगरे पधारे. सो विष्णुदास सुन्दर छीटके थान लै आगरे गये तब
श्रीआचार्यजीने कृष्णदाससो कही—'यह छीपाके पास छीट आछो है सो तू ले. जो मागे सो
दे.' तब कृष्णदासने विष्णुदाससो कही— 'यह छीटके थान सगरे हमको दे. याके दाम हैं सो
तू ले.' सो विष्णुदासने चोगुनो मोल कह्यो. सो कृष्णदासने सगरे रुपैया गिन दिये. और
कहे— 'और आछे थान होई सो लै आऊ !'

तब विष्णुदास चक्रत होई रहे जो ए तो बड़े महापुरुष अलौकिक जीव हैं ! जो मोल
न कियो, सगरे थान लिये, ताके दाम दिये ! सो इनको छीट देनो उचित नही है. इनको
पैसा मेरे घर आवेगो तो सगरो घर बैरागी होई जायेगो ! तब विष्णुदासने कही— 'ये सगरे
अपने रुपैया लेऊ. मेरे छीटके थान फेरि देऊ' तब कृष्णदासने कही—'तू बडो मूरख दीसत
है ! ते मोल कह्यो सो दाम दिये अब यह थान कबहू फिरै नाही. तेरे टोटा होई तो और
हू रुपैया ले. चोगुने तो दाम लिये !'

तब विष्णुदासने कही—'तुम महापुरुष हो ताते तिहारो द्रव्य घरमे आये सगरो घर
बैरागी होईगो याते मैं तुमको नाही बेचत. जो थान न देहू तो यह रुपैया हू राखो. और
थान हू राखो. परन्तु रुपैया तिहारो मोको पचे नाही' तब कृष्णदासने कही— 'यह थानको
श्रीआचार्यजीने श्रीमुखसो सराहना करिके कहे—"लेऊ." सो तू कोटीन उपाय करे तो यह
थान फिरै नाही और श्रीआचार्यजी बिना सेवक औरको कछु लेत नाही...' तब विष्णुदासने
कही— 'श्रीआचार्यजी कहा हैं ?"

उपनिषद्मे ठीक ही तो कहा है कि परमात्मा न तो प्रवचनसे मिलता है, न मेधासे
और न बहुश्रुततासे ही ! *परमात्मा कहा है ? किसे मिलता है ? उत्तर : परमात्मा जिसे*
खोज रहा हो वही परमात्माको खोज पाता है ! परमात्मा जिससे मिलना चाहता है वही
परमात्मासे मिल पाता है— "यमेवैष वृणुते तेन लभ्य." (कठ. १—२—२३).

---

१ वैष्णववाणी (अंक ४ वर्ष १९७९) श्रीनागरदास शास्त्री लिखित लेख

भारतवर्षकी तीन-तीन परिक्रमाओंमें श्रीमहाप्रभु इन्ही विष्णुदासोंको तो खोज रहे थे तभी तो विष्णुदास भी पूछ सके– "श्रीआचार्यजी कहा है ?"

निरोधलक्षण ग्रन्थमे कहा गया है कि भक्तोंके बीच भगवान्का इस भूतलपर प्रकट होना करणनिरोध है प्रपञ्चको भूल कर भक्तोका भगवान्मे आसक्त हो जाना व्यापार-निरोध है इस प्रपञ्चविस्मृतिपूर्वक भगवदासक्तिके व्यापारद्वारा भक्तके देह-इन्द्रिय-अन्त करण-प्राण आत्मा सभीसे सर्वत्र-सर्वदा भगवान्के स्वरूप या लीला का निरन्तर अनुभव होना (मानसी सेवा) फलनिरोध है तदनुसार विष्णुदासकी छींटपर श्रीमहाप्रभुका रीझना करण-निरोध था विष्णुदासका– "श्रीआचार्यजी कहा हैं ?" पूछना व्यापारनिरोध था और सेवाके बिना ही विष्णुदासको इस 'सेवाफल' का दान फलनिरोध था ! "यमेवैष वृणुते तेन लभ्य स्तस्यैष आत्मा विवृणुते तनु स्वाम्।"

जीवात्माका वरण करणनिरोध है और परमात्माद्वारा निजरूपका विवरण फलनिरोध है

वार्तामें आता है कि "तब श्रीआचार्यजी श्रीयमुनाजीके तीर पधारी विष्णुदासको न्हवाई नाम सुनाये ब्रह्मसम्बन्ध कराये विष्णुदासने विनती करी– 'महाराज ! मैं मूरख हो सो ऐसी कृपा करो जो श्रीभागवत आदि आपके ग्रन्थनमे कछु ज्ञान होई, आपके मारगको सिद्धान्त जान्यो जाई' तब श्रीआचार्यजी 'सेवाफल' ग्रन्थ करी विष्णुदासको सुनाये सो सुनिके विष्णुदासने विनती करी—'महाराज! 'सेवाफल' ग्रन्थके सुनेते सगरे शास्त्रपुराणको ज्ञान भयो परन्तु 'सेवाफल' ग्रन्थको अभिप्राय समुझिवेमे नाही आयो तब श्रीआचार्यजी कहें— *'ग्रन्थ' 'सेवाफल' ऐसो ही कठिन है भली करी ते पूछयो !'* पाछे आप 'सेवाफल' की टीका करिके सुनाये तब सगरे मारगको सिद्धान्त विष्णुदासके हृदयारूढ भयो सो मगन होई गये सो विष्णुदास थोरो सो कपडा छापें सो आगरे बचि आवें वामे देहनिर्वाह होई और सगरे दिन-रात मानसी सेवा श्रीआचार्यजीके ग्रन्थ श्रीसुबोधिनीजीके भावमे मगन रहें।"

यह मानसी सेवा परासेवा है, यह सिद्धान्तमुक्तावलीमे कहा गया था मानसी सेवाकी सिद्धि तनु वित्तजा सेवा करनेसे होती है, यह भी वही कहा गया था इस पुष्टिभक्तिरूपा सेवाके अधिकारी पुष्टिजीव ही होते हैं, सभी नही, यह पुष्टिप्रवाहमर्यादामे निरूपित किया गया है सिद्धान्तरहस्यमे पुष्टिजीवोको पुष्टिभक्तिरूपा सेवामे दीक्षित करनेके लिए आत्म-समर्पणका प्रकार समझाया गया है इससे भोगासक्ति पुष्टि-भक्तिमे बाधा पहुचानेमे असमर्थ बन जाती है नवरत्नमे सेवाको उद्वेगरहित बनानेके लिए चिन्तात्यागकी बात समझायी गयी है अन्त करणप्रबोध विवेकधैर्याश्रय तथा कृष्णाश्रय द्वारा इसी पुष्टिमार्गीय भगवत्सेवामे विघ्नरूप उद्वेग एवम् प्रतिबन्धो से बचनेके उपाय दिखलाये गये हैं चतुश्लोकीमे इस सेवाका पुष्टिमार्गीय धर्मार्थकाममोक्षवी पुरुषार्थचतुष्टयीमे क्या स्थान है यह दिखलाया गया है

भक्तिवर्धनीमें इस सेवाके बीजभावसे लेकर व्यसनदशातक होते विकासकी रूपरेखा खीची गयी है. सेवाके अनवसरमें चित्तके भगवत्प्रवण बने रहनेमे कोई व्यवधान न आये एदतर्थ जलभेद-पञ्चपद्यानिमे भगवत्कथाके श्रवण-कीर्तनका स्वरूप समझाया गया है. यह सेवा न निमर्ती हो तो भोगासक्तिपर काबू पानेके लिए गृहत्याग कब देना चाहिये. यह गृहत्याग व्यसनदशा सिद्ध होनेपर ही करना चाहिये अन्यथा नही. संन्यासनिर्णयमे यह सावधानी बरतनेकी सलाह दी गयी है. निरोधलक्षणमें इस सेवाके मानसी सेवाके रूपमें विकासके सहायक कारणोको परिभाषित किया गया है. अब सेवाफलमे उक्त तनु-वित्तजा सेवाका फलित रूप फलनिरोध अर्थात् अलौकिक-सामर्थ्यके रूपमे दिखलाया जा रहा है. यह परमात्माके भूमारूपमें सकल वृत्तियोका योजन है. इसे 'सर्वात्मभाव' भी कहते हैं.

समग्र षोडशग्रन्थोंको एकवाक्यता या आधारशिलाके जैसी केन्द्रीय धारणा, पुष्टिप्रवाह-मर्यादा ग्रन्थके—"भगवद्रूपसेवार्थं तत्सृष्टि: नान्यथा भवेत्," वचनमे श्रीमहाप्रभुने स्पष्ट कर दी है. अतएव षोडशग्रन्थके उपसंहाररूप सेवाफलमे पुष्टिमार्गीय फलसे भिन्न किसी फलका निरूपण स्वीकारनेपर; अथवा पुष्टिमार्गमे भी सेवासे भिन्न किसी कर्तव्य या अवस्था को पुरुषार्थ या फलरूप माननेपर, उपक्रम-उपसंहार आदि तात्पर्यनिर्धारक अंगोमें परस्पर विसंवाद उपस्थित हो जायेगा. अतएव इस ग्रन्थके उपसंहारमें श्रीमहाप्रभु आज्ञा करते हैं— "कुसृष्टिरत्र वा काचिदुत्पद्येत स वै भ्रम.".

इस ग्रन्थमें सेवाफलके रूपमे वर्णित 'अलौकिक सामर्थ्य,' 'सायुज्य' तथा 'वैकुण्ठादिषु सेवोपयोगिदेह' की अनेक व्याख्यायें विभिन्न टीकाकारोद्वारा दी गयी हैं.

यथा :

१) ये तीनों फल पुष्टिसर्गके तीन अवान्तर वर्ग पुष्टिपुष्टि मर्यादापुष्टि तथा प्रवाह-पुष्टि की त्रिविध कक्षाके जीवोंके फल हैं

२) तनुनवत्वरूप अलौकिकसामर्थ्य भगवद्विरहकी फलात्मिका अनुभूति है. सायुज्य भगवत्संयोगकी फलात्मिका अनुभूति है. नवतनुत्वस्वरूप सेवोपयोगिदेह उभयसाधारण अधिकारकोटीका फल है.

३) अलौकिक सामर्थ्य पुष्टिभक्तिका फल है; तथा सायुज्य और सेवोपयोगिदेह मर्यादाभक्तिके फल हैं.

४) अलौकिकसामर्थ्य सायुज्य और सेवोपयोगिदेह क्रमश. उत्तम मध्यम तथा साधारण कोटीके फल हैं.

५) संयोगानुभूतिरूप सायुज्य परम फल है. वियोगानुभूतिरूप अलौकिकसामर्थ्य तथा सेवोपयोगिदेह अधिकारसिद्धिरूप अवान्तर फल हैं.

६) अलौकिक सामर्थ्य और सायुज्य पुष्टिभक्तिके फल हं तथा सेवोपयोगिदेह मर्यादाभक्तिका फल है.

७) अलौकिकसामर्थ्य अति-अन्तरग सेवाका फल है अन्तरग सेवाके द्विविध सायुज्यरूप फल होते हैं केवल आत्मना अनुभूयमान सायुज्य और अलौकिक-देह-इन्द्रिय-अन्त करण-आत्मना अनुभूयमान सायुज्य. सेवोपयोगिदेह बहिरग सेवाका फल है

८) सर्वेन्द्रियोकी भगवत्परता अलौकिकसामर्थ्य है. देहनाशक विगाढभावसे अन्यस्फूर्ति-रहित *आन्तर सयोग सायुज्य* है मानसी सेवाकी सिद्धि होनेपर, वैकुण्ठादि भगवद्धामोमे जैसे देह होते हैं वैसे, सेवोपयोगिदेहकी सिद्धि तृतीय फल है

भगवान्के द्वारा प्रदत्त भावोंके अनुसार भगवदनुभूतिके अनेक प्रकारोंमे भक्तोको फल-रूपता प्रतीत होती है. अत सभी व्याख्याकार अपनी-अपनी फलरुचिके अनुसार फलकी व्याख्या करते रहते हैं. इनमे यदि मतभेद दिखलायी पडता है तो वह भी अपनी-अपनी फल-रुचिकी मस्तीका मधुर मतभेद है अत मतभेद भी फलात्मक है !

ग्रन्थके तात्पर्यका जहा तक प्रश्न है तो वह भागवत (३।५।३२–४०) के नौ श्लोकोकी सुबोधिनीमे श्रीमहाप्रभुने सुस्पष्ट किया है. वहा भी सेवाफलकी तरह भक्तिके तीन फल दिख-लाये गये हैं जीवन्मुक्ति सायुज्य और वैकुण्ठलोकप्राप्ति अत अलौकिकसामर्थ्य और जीवन्मुक्ति को एकरूप मानना चाहिये, तथा वैकुण्ठादिषु सेवोपयोगिदेह और वैकुण्ठलोक-प्राप्ति को एकरूप मानना चाहिये, उभयत्र सायुज्य तो समान है ही. इस एकरूपताको निर्धारित करनेके बाद सुबोधिनीमे जो विस्तृत विवरण फलत्रयका दिया है तदनुसार सेवाफल ग्रन्थमे निर्दिष्ट फलत्रयका भी स्वरूपनिर्धारण सुकर हो जाता है

अलौकिकसामर्थ्य प्रकट होता है, इस भूतलपर भगवत्सेवा करते हुवे, सकल इन्द्रियोसे भगवदनुभूतिके रूपमे, यही पुष्टिमार्गीय जीवन्मुक्ति है इसे 'फलनिरोध,' 'सर्वात्मभाव,' 'व्यसनोत्तर-कृतार्थता,' 'तनुनवत्व' या 'मानसीसेवा' कुछ भी कहो, एक ही अवस्थाके विभिन्न पहलुओका निरूपण है स्थूल दृष्टिसे शब्दार्थ भिन्न भिन्न है पर पदार्थ सर्वत्र एक ही है

भागवतके दशम स्कन्धका वर्ण्य-विषय निरोध है. एकादश स्कन्धका वर्ण्य-विषय मुक्ति है द्वादश स्कन्धका वर्ण्य-विषय आश्रय-ब्रह्मभावापत्ति है इस स्कन्धत्रयीके विषयक्रम तथा श्रीमहाप्रभुके—' एवं भेदत्रय निरूपित सायुज्य वैकुण्ठ जीवन्मुक्तिश्चे ति" (सुबो ३।२५।४०) वचन की एकवाक्यताको दृष्टिगत करनेपर यहा सेवाफलग्रन्थमे वर्णित फलत्रयका रूप स्पष्ट-तया निर्धारित हो जाता है अलौकिकसामर्थ्य फलनिरोध है, इस भूतलपर घटित होनेवाली भक्तोकी जीवन्मुक्तिकी तरह, जो दशम स्कन्धके भक्तोके जैसी भगवदनुभूतिका एक अलौकिक प्रकार है सायुज्य परमात्मामे लय है, विदेहमुक्तिकी तरह, जो एकादश स्कन्धका वर्ण्य-विषय है. वैकुण्ठादिषु-सेवोपयोगिदेह आश्रय-ब्रह्मभावपत्ति है, वैकुण्ठादि दिव्य भगवद्धामोंमे दिव्य देह प्राप्त करके पुन भगवद्भजनके सुअवसरकी प्राप्ति है, जो भागवतके द्वादश स्कन्धका वर्ण्य विषय है

इस तरह तीनोकी एकवाक्यता निर्धारित हो जानेपर निरोधलक्षण ग्रन्थके बाद सेवाफल

तद्भावोदये नैव सा भवेदित्यर्थः। तेन तत्करणेपि दानेनैव तादृशभावः सिध्येन्नान्यथेति ज्ञेयम्, परन्तु तत्कृतिस्तु सर्वदा कर्तव्या, अकरणे भावः क उद्भवेद्, विषयाभावाद्, अत एवाङ्गभूते ते उक्ते ॥ १ ॥

ततः किमित्यत आहुः फलमिति।

**फलं वा ह्यधिकारो वा न कालोत्र नियामकः।**

तादृशप्रभुरभावे सति फलं स्वरूपसम्बन्धरूपम्, **अधिकारः** अलौकिकदेहवयोगुणादिकं भवेत्, तत्राहुः **न काल** इति। अत्र **कालः** वयोवस्थादिसमयरूपः **नियामको** न, भगवदिच्छयैव सर्वं लीलोपयोगि तदैव भवेत्, न कालापेक्षा। तादृशं प्रति भगवतोपि विलम्बासहिष्णुत्वात्।

एवं पुष्टिफलं निरूप्य मर्यादाफलं निरूपयन्ति। तथा हि, मर्यादामार्गाङ्गीकृतस्य माहात्म्यज्ञानपूर्वकसेवाकरणे भगवति माहात्म्यभावसहितस्नेहेन तदात्मतया **सायुज्यं** साक्षात्पुरुषोत्तमस्वरूपे भवेन्न त्वक्षरे। तत्र तदालौकिकदानेच्छाऽभावात् स्वरूपसम्बन्धात्मकं फलं न भवेदित्यर्थः। यदा पुनः भगवान् कदाचिद् दातुमिच्छति तदा स्वस्वरूपात् पृथक्कृत्य तादृशं प्रभुरभावदानं कृत्वा फलं प्रयच्छति, यतोस्मिन्मार्गेपि दातृत्वाभिप्रायेणैव वरणकार्यत्वात्। एवं भक्तिहंसे स्फुटीकृतं श्रीमत्प्रभुचरणैः 'भक्तिमार्गीयभक्तकृतेत्यारभ्य, अत्रापवर्गवर्त्मनी'त्यन्तम्।

प्रवाहभक्तिमार्गलक्षणकथनेन व्यापिवैकुण्ठस्य लोकत्वेनाक्षरात्मकत्वादक्षरमुक्तिरेव फले, न तु पुरुषोत्तमसायुज्यम्। अक्षरमुक्तौ तु आद्यफलदानेच्छाऽभावात्तदर्थं वरणमेव नास्तीति नाद्यफलसम्भावनेति मर्यादातो हीनत्वमुक्तम्। पुरुषोत्तमसायुज्ये तत्सम्भावना वर्तत इति प्रवाहभक्तिमार्गसेवाफलादुत्कृष्टत्वम्। यत एतत्फलदानेच्छया यद्वरणं तन्मार्गद्वये एव, न तु प्रवाहमार्गे, तदप्युक्तं भक्तिहंसे 'विवरणे चास्ति प्रकारद्वय'मिति।

एवं सेवास्वरूपं साधनफलसहितं मार्गत्रयेपि निरूपितमिदानीं तादृशसेवासिद्धौ प्रतिबन्धकत्रयं निरूपयन्ति **उद्वेगः प्रतिबन्धो वा भोगो** वेति।

**उद्वेगः प्रतिबन्धो वा भोगो वा स्यात्तु बाधकम् ॥ २ ॥**

श्लोकविवरणे **सेवायां प्रतिबन्धकत्रय**मित्यादि। एतत्त्रितयनिवारणे **त्रयाणां साधनपरित्यागः** इति विवरणे विवृतम्। तत्रोद्वेगसाधनं लौकिकशोकदुःखादिकम्। तस्य भगवदिच्छाधीनत्वं ज्ञात्वा तत्त्यागेन तस्यापि त्यागो भवत्येवेति। 'चित्तोद्वेग'मित्युक्तत्वादत्र न विशेषतो विवृतम्। तथा अपरः **प्रतिबन्धः। स च द्विविधः। साधारणो भगवत्कृतश्च।** साधारणो **बुद्ध्या त्याज्यः।** बुद्धिस्तु यस्मिन्कृते सेवाप्रतिबन्धोऽभूत्तत् स न कर्तव्य इति विचाररूपबुद्ध्या त्याज्यः। भगवत्कृतमग्रे वदिष्यन्ति। लौकिकभोगस्तु विषयरूपत्वात् बाधक इति तत्साधनवस्तुमात्रत्यागादेव तत्त्याग इति तदेव त्याज्यमित्यर्थः। एवं त्रयं त्याज्यमित्युक्तम् ॥ २ ॥

**बाधकानां परित्यागो भोगेष्वेकं तथापरम् ।**

एतत्त्रयाणां साधनपरित्यागेनैव बाधकानां परित्यागो भवतीति शेषः । ननु सेवायां वस्तुमात्रोपयोगात्तत्त्यागे कथं तन्निर्वाह इत्याशङ्कायामाहुः **भोग** इति । तत्रापि भोगे एकं लौकिकं त्यजेदपरं नेति शेषः । यतस्तेषां स्वार्थमुपयोगे लौकिकत्वम्, भगवदर्थमुपयोगे अलौकिकत्वम्, अतः स्वार्थं ते त्याज्याः, भगवदर्थमुपयोज्या इति भावः ।

तदनन्तरमबाधकत्वमाहुः **निःप्रत्यूहमि**ति ।

**निःप्रत्यूहं महान् भोगः प्रथमे विशते सदा ॥ ३ ॥**

**निःप्रत्यूहमि**ति प्रतिबन्धरहितं प्रत्युत साधकम् ॥ ३ ॥

एवं बाधकानां परित्यागे निर्विघ्नसेवासम्भवे तस्यैव भोगस्य प्रतिबन्धत्यागे च हेतुं निरूप्य भगवत्कृतप्रतिबन्धे हेतुं निरूपयन्ति **अकर्तव्यं भगवत** इति ।

**अकर्तव्यं भगवतः सर्वथा चेद् गतिर्न हि ।**

**यथा वा तत्त्वनिर्धारो विवेकः साधनं मतम् ॥ ४ ॥**

अस्य विवरणे **भगवत्कृतमि**त्यादि **विवेक** इत्यन्तम् । अस्यायमर्थः । यदि **भगवतः** तत्फलदानं न कर्तव्यं भवेत् तदा तादृशसेवायां सर्वथा सर्वप्रकारेणापि गतिर्नभवति । तत्र यथा तथा प्रतिबन्धकमेव भवेत्, न तु निर्वाहः । ननु स्वमार्गीयसेवायां तस्य भगवान् प्रतिबन्धं करोतु, परन्तु अन्यमार्गीयसेवायां न करिष्यतीति चेत्, तत्रोक्तं विवरणे **तदा अन्यसेवापि कृता व्यर्थे**ति । प्रवाहादिमार्गेषु **कृतापि व्यर्था** । यतः सकलमार्गेषु फलदाता भगवानेव । तस्य स्वकर्तव्यमेवेतीति तथा । यदा यत्ने कृतेपि प्रतिबन्धकं भवेत् तदा **यथा तत्त्वनिर्धारो** भवेत् तथा कर्तव्यम् । तत्त्वनिर्धारः कथमित्याकाङ्क्षायां विवरणे विवृतम् । **आसुरोयं जीव** इति । एवं तस्य विवेकेन ज्ञानस्थितिरूपमेव **साधनं मतम्**, यतः पूर्वमासुर एव जीवः । यथासुरदेहयुक्तम्लेच्छादिषु कस्यचिद्दैवजीवत्वात् भगवत्परता दृश्यते, तथासुरजीवस्यापि कदाचिद्दैववशाद्भगवद्भक्तसङ्गेन सेवायां प्रवृत्तिर्भवति, परन्तु आसुरे भगवतो दातृत्वाभावात्तत्र प्रतिबन्धकमेव जायते । यतस्तेषामन्यदेव फलम् । तदे'वासुरी योनिमापन्ना' इत्यादिनोक्तम् । तथापि भगवद्भक्तसङ्गानुभावात् ज्ञानमार्गेपि स्थितिरुक्ता ॥ ४ ॥

तत्रापि चेत् स्थितिर्न भवेत्तदा तत्पूर्वोक्तफलविषयिणी चिन्तापि सर्वथा त्याज्येत्याहुः **द्वितीय** इति ।

**द्वितीये सर्वथा चिन्ता त्याज्या संसारनिश्चयात् ॥ ५ ॥**

विवरणे **ज्ञानस्थित्यभावे चिन्ताऽभावार्थं द्वितीय** इति । तत्र हेतुः । **संसारनिश्चया**दिति । तस्य पूर्वोक्तसंसाररूपस्य फलस्यैव निश्चयात् सा न कार्या, पुनस्तदाशोच्छेद एवेति सर्वथेत्युक्तम् ॥ ५ ॥

१ सविवृतिश्लोकार्थो विवरणकृद्भिर्विस्मृतः, अथवा विवरणभागस्त्रुटित इति प्रतिभाति ।

ननु यथा द्वितीयप्रतिबन्धे पूर्वोक्तप्रकारेण आसुरजीवस्य सर्वथा फलविपयिणी चिन्ता त्याज्या, तथा साधारणप्रतिबन्धेपि सा त्याज्या, अन्यथा सा कथं भवेदित्याशङ्का-निरासायाहुः **न त्वाद्य** इति ।

**न त्वाद्ये दातृता नास्ति तृतीये बाधकं गृहम् ।**

**आद्ये** साधारणप्रतिबन्धे **दातृता भगवतो नास्तीति न** किन्तु वर्तते, परन्तु फलस्य कियज्जन्मानन्तरभावित्वात् तद् भवति । तदपि प्रतिबन्धकं साधारणं निवारयितुं शक्यम् । तेन भगवत्कृत एव तस्मिन् दातृत्वाभावो, न साधारण इति ज्ञेयम् । अतो यस्य आद्यफलदानार्थं मर्यादयाङ्गीकारः तस्य तथैव सेवाकरणे साधारणप्रतिबन्धश्चेद् भवेत्, तदा तन्निवारणेन सेवानिर्वाहात् पूर्वं सायुज्यफलं तदनन्तरं तत्फलं भविष्यतीति सा चिन्ता न त्याज्येति भावः । यस्य पुष्टौ अङ्गीकारस्तस्य तन्निवारणेन तादृशतत्सिद्धौ तत्फलं भवेदिति सा तथेत्यर्थः । एवं सति प्रवाहमार्गसेवायामपि सेवायाः साधनदशमानत्वात् साधारणप्रतिबन्धे दातृत्वं भविष्यतीति शङ्कानिरासाय **आद्यफलाभाव** इति विवृतम् । आद्यफलस्याभावो यत्रैतादृशे प्रवाहमार्गे तदर्थमङ्गीकार एव नास्तीति नाद्यफलसम्भावना-पीति न दातृत्वम् । सा सेवापि नाधिदैविकी, तत्र पूज्यस्वरूपेपि नाधिदैविकत्वम्, किन्तु विभूतिरूपत्वमिति महद्वैलक्षण्यात् कुतः साम्यमिति ज्ञेयम् ।

एवं साधारणप्रतिबन्धस्य व्यवस्थामुक्त्वा प्रथमवृत्तौ सर्वथा लौकिकभोगत्यागा-सम्भवात्, तत्रापि भगवतो दातृत्वाभावमाशङ्क्य तन्निवारणाय तद्व्यवस्थामाहुः, **तृतीय** इति । **तृतीये** लौकिकभोगेपि दातृता नेति न, यत एतन्मार्गे द्वये तादृश एवाङ्गीकारः, किन्तु तत्र मूलभूतं साधनं यद्गृहं तद्बाधकमिति तत् त्याज्यमिति शेषः । तत्त्यागे सर्वथा भोगाभावात् प्रतिबन्धकाभावेन तादृशभगवद्भक्तसङ्गेन सेवानिर्वाहात् तत्फलमपि भवेदिति भावः । एतदेव विवरणे विवृतं **भोगाभावस्तदैवेति** ।

अत्र कश्चित्पूर्वपक्षी शङ्कते । तथा हि । स्वमार्गीयपरित्यागस्तु प्रेमासक्तिव्यसनात्मक-भक्तौ सत्यां कर्तव्यो, न तु साधनभक्तौ । तदुक्तं सन्न्यासनिर्णये 'सन्न्यासवरणं भक्तौ' 'अतोत्र साधने भक्तौ नैव त्यागः सुखावह' इति च । तत्र करणे विपरीतफलमपि भवेदि-त्यपि । प्रकृते तु तत्पूर्वमेव भोगाभावार्थं सेवानिर्वाहार्थं च त्याग उच्यत इति कथमेक-वाक्यतायां विरोध इव प्रतिभाति ?

तत्रोच्यते । प्रथमं स्वमार्गीयभक्तिसिद्धौ मुख्यं कारणं सेवा । सा सेवा 'गृहे स्थित्वा स्वधर्मतः अव्यावृत्त्या गृहव्यावृत्त्यभावे न, प्रत्युत पुत्रकलत्रादीनां भगवदर्थमुपयोगेन स्वधर्मतः करणे सिध्येत्, तच्चेदनुकूलं भवेत्, नो चेत् भजनप्रतिबन्धकत्वेन सर्वात्मना तस्य त्याग एवोचितः । अन्यथा तत्सङ्गेन पुत्रकलत्राद्युपभोगे स्वस्य भजनासम्भवे शरणगतिर्भज्येत, तदा सेवाऽभावे प्रेमासक्तिव्यसनात्मिका भक्तिरपि न भवेत्, तदभावे तन्मार्गीयपरि-त्यागोपि न, तदभावे फलाभाव एव च स्यादिति मार्ग एवोच्छिद्येत इति । तद्भोगाभा-

सिद्ध्यर्थं तथा तत्सेवासिद्ध्यर्थं च कथनम्, तदनुकूलतद्ग्रहणाभिप्रायेणैवेति, न तत्राश्रमस्वीकार, सेवाभावानुपपत्ते, साधनभक्तौ निषेधाच्च । एतदेवोक्त तत्त्वार्थदीपेपि 'प्रतिकूले गृहं त्यजे'दित्यनुकूलतत्त्यागाभावाभिप्रायेणान्ते प्रेम्णि जाते अद्वेपि यत्किञ्चित् भोगस्यापि बन्धकत्वात् तेनैव तन्नाशे सति ततो यथा साधारणप्रतिबन्धनिवारणेन सेवाकरण तद्दान च, तथा लौकिकभोगत्यागेनापि निर्विघ्नसेवाकरणे सति तत्फल भवेदिति ज्ञेयम् । तत्र पुष्टिमर्यादाया भगवति लीलामाहात्म्यगुणादिभावेनैव प्रेम भवेत्, न पुष्टिरीत्येति तादृशस्य तादृशप्रेम्णा क्रमेण सर्वविषयत्यागे, ततो तत्प्रभावेन तदात्मकतया श्रीकृष्णे सायुज्य भवेत्, ततो यदा दानेच्छा तदा स्वरूपात् पृथक्कृत्य तद्भावदाने तत्तत्फलानुभव कारयिष्यतीति मर्यादाङ्गीकारे आद्यफलदानप्रकार उक्त । तदुक्त तत्त्वार्थदीपे 'सर्वत्यागेऽनन्यभावे कृष्णभावैकमानसे सायुज्य कृष्णदेवेन शीघ्रमेव ध्रुव फल'मिति सायुज्यानन्तर ध्रुव फल तदेवेतिभावार्थ । यस्य शुद्धपुष्ट्यङ्गीकारस्तस्य तदारभ्येव पूर्वोक्तभोगादिप्रतिकूलगृहत्यागेनानुकूलगृहे स्थित्वा सेवाकरणे भावात्मिकैव प्रवृत्तिर्भवेत्, ततो यदा प्रेमासक्तिव्यसनानि भावात्मकतया पुष्टानि भवेयु, तदा तत्र स्थितो यत्किञ्चिद्भोगसम्बन्धेनापि भावनाश इति तद्भावेन तद्विगाढभावपोषादिना पूर्णविरहानुभवार्थं सन्यासनिर्णयोक्तप्रकारेण परित्याग सन्यास आवश्यक उक्त । अन्यथा क्षणमात्र भावान्तरसम्बन्धे भावशैथिल्याद् विरहानुभवाभावात् फलाभाव इति । ततस्तत्पूर्णानुभवे दशमावस्थया प्रतिबन्धकदेहनिवृत्तौ अलौकिकतत्प्राप्त्या तत्फलानुभवो भवतीति पुष्टिमार्गाङ्गीकारे फलदानप्रकार उक्त । अत एव मर्यादाया 'मदर्थेऽर्थपरित्याग' इत्यादिना भोगाभावार्थं भगवत्प्राप्त्यर्थं च सर्वसमर्पणरूप एव त्याग उक्त, न तु सन्यासप्रकार । यत सन्यासे तस्य पुष्टभावादतोपि तादृशैरेव सम्भोगे भवतीत्युक्तबाधकत्वात् । अत कलौ स सन्यास पश्चात्तापायेति निषेधोप्युक्तसिद्ध एव । अग्रेपि त्वयोपभुक्तेपि विरोधो भवतीति । सन्यासस्तु तादृशभक्ताविवेत्युक्तम्, 'सन्यासवरण भक्ता'विति मार्गद्वयभेदेन परित्यागस्य भिन्नत्वान्न कोपि विरोध इति ज्ञापितम् ।

एव मार्गत्रयसेवाफलभेद त्यागभेद च निरूप्योपसहरन्ति अवश्येयमिति ।

**अवश्येय सदा भा या सर्वमन्यन्मनोभ्रम. ॥ ६ ॥**

**इयं** पूर्वोक्ता त्यागपूर्वनिरूपिका मदुक्ति **अवश्या भाव्या,** सर्वथा **सदा, भाव्या** कर्तव्या । अथवा **अवश्या** यद्यपि स्ववशेन कर्तुं न शक्यापि तथापि **भाव्या,** भावयितु मनसि चिन्तयितु योग्या । तत एव सर्वं भविष्यतीति सर्वथा कर्तृत्वमुक्तम् । आवश्यककरणे हेतु एतदन्यत् **सर्व मनोभ्रम** एव न [illegible] फलम् । मदुक्तप्रकारातिरिक्तकरणे सर्वोत्कृष्टफलाभावो न, प्रत्युत मनसो भ्रम एवेत्यर्थ ।

ननु कथ भ्रम ? सर्वैस्तदेव क्रियते तत्राहु **तदीयैरपीति** ।

**तदीयैरपि तत्कार्यं पुष्टौ नैव विलम्बयेत् ।**

**गुणक्षोभेपि द्रष्टव्यमेतदेवेति मे मतिः ॥ ७ ॥**
**कुसृष्टिरत्र वा काचिदुत्पद्येत स वै भ्रमः ॥ ७॥ ॥**

**तदीयैः** पुष्टिमार्गातिरिक्तजीवैः भ्रमसम्बन्धिभिरपि **कार्यं** तदेव, सर्वत्यागपूर्वकं मदुक्तरीत्यैव भजनं कार्यम् । न क्रियते चेत् तदा अज्ञानाद्भ्रम एव, न तु फलम् । यदि तदीयैरपि तदेव कार्यं तदा यः पुष्टौ स्थितः कोपि मदुक्तप्रकारसेवाकरणजनितप्रेमासक्तिव्यसनादिभाववान् स तु विशेषतः क्षणमात्रमपि न विलम्बयेत्, मदुक्तकरणे विलम्बं न कुर्यात् । यदि विलम्बयेत् तदा पुष्टिभावान्तरत्यागाभावे विजातीयसङ्गेन भावशैथिल्यात् फलाभाव एव भवेदित्यर्थः । यतस्तादृशस्य स्वरूपव्यतिरिक्तवस्तुमात्रस्मरणस्यापि फलप्रतिबन्धकत्वम् । तदेवाहुः **गुणक्षोभेपीति** । अयं भावः । तादृशपुष्टिमार्गीयस्य व्यसनानन्तरं विरहानुभवार्थं त्यागे कृते स्वरूपसङ्गाभिलाषायाः प्राचुर्याद्दिगाढभावेन देहप्राणेन्द्रियान्तःकरणानि स्वरूपात्मकान्येव भवन्ति, यतः विकलत्वास्वास्थ्यादिकं निरन्तरं भवति तदा तादृग्दशायां मध्ये कदाचित्तस्य भगवल्लीलागुणादिस्फूर्तिर्न भवेत्, तदा मनःस्वास्थ्येन भावशैथिल्यात् स्वरूपान्तरायो भवेदित्येव गुणक्षोभः गुणैः कृत्वा मनःस्वास्थ्यरूपोऽविकारस्तस्मिन्नपि एतदेव द्रष्टव्यम्, फले प्रतिबन्धकमेव, **द्रष्टव्यमिति**पदं प्रत्यक्षप्रमाणत्वेनोक्तम् । एतेन लीलागुणस्मरणस्य बाधकत्वं कथं वक्तुमुचितमित्याशङ्का निरस्ता । एतदेव सन्न्यासनिर्णये 'ज्ञानं गुणाश्चे'ति बाधकत्वमुक्तम् । एवं सति यत्र स्वरूपगुणस्मरणेपि फलाभावः, तत्र गृहादीनां प्रतिबन्धकत्वेन त्यागविलम्बे फलाभाव इति किं वाच्यमिति भावः । अत एव सर्वथा भोगाभावस्त्याग एवेत्याशयेन विवृतावुक्तं **भोगाभावस्तदैवेति** । अत्र प्रमाणं **मे मतिरिति** । स्वस्यैव तादृक्प्रकारकानुभवात् स्वमतिरेवोक्ता । यदि मन्मतिप्रमाणत्वेन य एव करिष्यति तर्हि तस्य सर्वं सुखेन भविष्यतीति भावः । अकरणे बाधकमाहुः **कुसृष्टिरिति** । अत्र एतत्प्रकारकसेवाफलनिरूपणरूपमदुक्तौ कथं किमित्यादिरूपा **कुसृष्टिश्चेदुत्पद्येत वै** निश्चयेन **स भ्रम** एवेति सा न कार्येत्यर्थः । करणे सर्वस्वहानिरेवेति निश्चयः ॥ ७॥ ॥

एतद्विवृतेरर्थो यद्यपि विवृतो मद्वरणैः ।
तदपि तदेव हि गूढं दृष्ट्वा भावः स्फुटीकृतः कृपया ॥ १ ॥
सोपि तथेतरथा वा नो जाने सद्भिरीक्षणीयस्तत् ।
कृपया च मार्जनीयस्तेन ततोहं विभूषणीयश्च ॥ २ ॥
श्रीमदाचार्यचरणे सरोजे मानसे मम । तिष्ठतां विकचे नित्यं तत्प्रभावोत्र भानुना ॥ ३ ॥

**इतिश्रीमदाचार्यकृतसेवाफलनिरूपणविवृतौ टिप्पणी समाप्ता ॥**

# प्रथमं परिशिष्टम्

---

# सेवाफलविवरणत्रयम्

---

श्रीकृष्णाय नमः ।

## सेवाफलम् विवृतिसमेतम् ।

नैसर्गिकी मधुभिदश्चरणस्य सेवा जीवस्य तत्र सुतरां हरिमार्गलिप्सोः ।
बुध्येत नो विघटनं च फलं यदास्यां नो सेवनाप्रथनमत्र तदर्थमिष्टम् ॥ १ ॥
यद्धिर्बभूव जगतो हितकारणाय पारीक्षितस्य विवृतिं पदशश्चकार ।
यः सूत्रयोर्निगमसंशयबाधनाय संक्षिप्य च प्रकरणानि नुमस्तमीशम् ॥ २ ॥

सिद्धान्तमुक्तावल्यादिभूयस्सु निबन्धेषु सेवाया उक्तत्वेऽपि तत्फलानां प्रतिबन्धानां चेतस्ततो विप्रकीर्णत्वेन तत उद्धर्तुमशक्तान् स्वान् संक्षिप्य तदुपदेष्टुं सेवाफलनिरूपणं प्रतिजानते यादृशीत्यादि, नोच्यत इति । तत्फलं तु श्रोत्रभिमुखीकरणं निरूप्यार्थस्य यावतः प्रतिज्ञोचिता, नत्वेकदेशस्येति तु न शंक्यम् । यतः फलमेव प्रधानं प्रतिबन्धकं तु तद्विघटकतया त्याजनार्थं निरूपितमिति तत्क्षेपस्य न पृथक्प्रतिज्ञानम्, स्वप्र-

धानत्वेनानिरूपणात् । फलमिति जात्यैकवचनम् । यादृशी यत्प्रकारिका उक्ता सिद्धान्तमुक्तावल्यादौ, अकरणे प्रत्यवायः प्रार्थः । स च दतय इवेत्यादि निन्दया बोध्यः । तत्सिद्धौ तस्या यावज्जीवनिर्वाहे व्यसनरूपत्वसिद्धौ फलमुच्यते । फलं चात्र वक्ष्यमाणत्रयमेव बोद्धव्यम् । यत्तु सेवाया एव फलरूपत्वेन तत्फलकथनमनुपपन्नमित्याशंकनम्, तत्तु केवलपौष्टिकाभिप्रायेण, पुष्टिमर्यादास्थितस्य तु साधनरूपत्वमेव सेवायाः । न चैवं गौणत्वम् । पुरुषोत्तमस्यैव साध्यसाधनोभयरूपत्वात् । कर्तृतावच्छेदकमेव परं गौणम्, फलस्य मूले स्पष्टतयाऽकथनादुक्तं विवरणे सेवायां फलत्रयमिति । अलौकिकसामर्थ्यं तु अपारतेजसः फलदित्सायां सलीलस्य हृदि प्रवेशे तदनुभवसामर्थ्यम् । अत्रानुभवश्च मनसा तदध्यक्षीकरणम् । न चैतदेतच्छरीरेण संभवति, अप्राप्य मनसा सहेति वचनात् । तदर्थं च तद्भोगयोग्यत्वमलौकिकत्वं मुग्यम् । तच संघाते अलौकिकसंघातस्य विज्ञानेघानन्दमयस्य प्रवेशात् स्पर्शसंबन्धेऽयसश्चामीकरत्वमिव सम्पद्यते । एतच्च प्रभ्वेकसंपाद्यमित्याहुः **अलौकिकस्य दाने हि चाद्यः सिध्येद् मनोरथ** इति । चस्त्वर्थे । हि युक्तश्चायमर्थः । 'यमेवैष वृणुते तेन लभ्य' इति श्रुतेः । 'तमेव विदित्वे'ति तु मार्यादिकस्य । तथा चोक्तम् 'गतेरर्थवत्त्वमुभयथा अन्यथा हि विरोध' इति । सायुज्यं त्वन्तर्गृहगतानामिव मध्यमं फलम् । तच्च द्विविधम् । बाह्यमाभ्यन्तरं च । बाह्यमलौकिकशरीरप्राप्तिरूपम्, आन्तरं तु ब्युचरणसामयिकपरिच्छिन्नानन्दाद्भिन्नत्वेन अणुत्वेन च विशिष्टस्य ब्रह्मणि लयः । अत एव च निरस्तधर्मस्य ब्रह्मणि लयरूपात् कैवल्याद्भेदः । न च भक्तस्य न लयः । ज्ञानिनोऽक्षरे भक्तस्य पुरुषोत्तमे लयादिति भाष्योक्तेः । एतच्च 'सोऽश्नुते सर्वान् कामान् सह' 'निरञ्जनः परमं साम्यमुपैती'ति वाक्याभ्यां गम्यते । परं ब्रह्मोपैति तदनन्तरं साम्यमुपैतीति वाक्ययोजनां कृत्वाशेषैर्ब्रह्मधर्मैः कतिपयैर्वेति संदिह्य 'न तत्समः' इति निषेधादशेषैः साम्यासंभवात् कतिपयैरेव साम्यं निश्चित्य, न च कतिपयैरपि धर्मैर्जायमानं साम्यं तदभेदगमकमित्यर्थे 'कुशाच्छन्दःस्तुत्युपगानवदि'ति सूत्रावयवयोजनायामान्तरसायुज्यस्य 'हानौ तूपायन'सूत्रभाष्य एव स्पष्टत्वात् । तृतीयं **सेवोपयोगिदेहो वैकुण्ठादिषु** । सेवाया उप समीपे योगवत् शरीरप्राप्तिरूपम्, पक्ष्यादीनामिव । ननु प्रभ्वेकसम्पाद्यपूर्वफलस्यान्यानधीनत्वेपि सायुज्यसेवोपयोगिदेहयोः फलतदधिकाररूपमध्यमावान्तरफलयोस्तु ज्ञानादीनामिव कदाचित् कालकर्मसाध्यत्वं भवेदिति नेत्याहुर्मूले **फलं वा ह्यधिकारो वा न कालोत्र नियामक** इति । फलं सायुज्यम् । अधिकारः सेवोपयोगिदेहः । अत्र एतदुभयोः कालो न नियामकः, फलदः प्रतिबन्धको वा नेत्यर्थः । अत्र वाद्वयं फलतदधिकारयोरुभयोरपि भगवत्समक्षत्वबोधनाय । यद्वा, वाद्वयं क्रियाक्षेपकम्, फलं वा स्यादधिकारो वा स्यात् । कालेनेति नेत्याहुः यतस्तयोरनियामक इति । अत्र एतयोः । उद्वेगः प्रतिबन्धो वेति वाक्यं विवृण्वन्ति **सेवायां प्रतिबन्धकत्रयमिति** ।

उद्वेगः सेवायां क्रियमाणायां मनोवृत्तेरस्थिरता । प्रतिबन्धभोगयोः प्रकारभेदानां बहु वक्तव्यत्वेन प्रथमतः सिद्धानां दोषाणां दुर्विनाश्यत्वात् श्रयाणां साधनेत्यादिना तत्सामग्रीत्यागमेवोपदिश्य पाठक्रममनपेक्ष्य चरमोद्दिष्टमपि भोग सन्निहिततरत्वेन लौकिकालौकिकभेदेन विभज्य 'भोगो द्विविध' इत्यादिना लौकिकस्य त्याज्यत्वं 'तत्र लौकिके'त्यादिना निर्दिश्य प्रतिबन्धद्वैविध्यं वक्तुं 'प्रतिबन्धोपि द्विविध' इत्यादिना तत्स्वरूपं निर्दिश्य द्वयं विभजन्ते **साधारणो भगवत्कृतश्चेति** । तत्र साधारणो दुरदृष्टजन्यः, भगवत्कृतस्तु उत्तम मार्ग दृष्ट्वा सङ्गतः प्रवृत्तासुरमात्रविषयकः । न च तादृशस्य नात्र प्रवृत्तिरिति रागतः प्रवृत्तेरनिवार्यत्वात् भगवत्कृतस्याग्रे वक्तव्यत्वात् तत्स्वरूपमात्र निर्दिश्य साधारणमाद्यपदेनोल्लिख्य बुद्ध्या त्याज्य इत्याहुः । आद्यत्वं तु प्रतिबन्धक्रमे, बुद्धिस्तु सेवायामायतनस्य लौकिकवैदिकादेरनावश्यकस्याकरणम्, आवश्यकस्य तु अनवसरे मार्गवा करणम् । **निःप्रत्यूहं महान् भोगः प्रथमे विशते सदेत्यस्य** व्याख्यानमलौकिकभोगस्तु फलानां मध्ये प्रथमे विशतीति । अस्य व्याख्यानस्य व्याख्येयानुसारित्वाभावात् तदर्थमात्रप्रकाशकत्वाच्चादोषः । अक्षरार्थस्तु भोगो महान् स्वरूपतः फलतः साधनतश्चेति । स्वरूपं स्वरूपानन्दानुभवः । साधन प्रभ्वनुग्रहः । विषयानन्दब्रह्मानन्दापेक्षया स्वरूपानन्दस्योत्कृष्टत्वात् । फलं तु 'सोऽश्नुते' इत्यादि प्रथमेऽलौकिकसामर्थ्यरूपे फले विशते । **निःप्रत्यूहं** क्रियाविशेषणमेतत् । जायमान इति क्रियाध्याहर्तव्या । **विशतौ** विशेषणदानस्याप्रयोजकत्वात् तत्रापि विशेषणस्य संभवादर्थवत्ता, न च कश्चिद् व्यभिचारोस्ति । एतस्मिन् भोगे कालकर्मादीनामविघातकत्वात् । **अकर्तव्यं भगवतः सर्वथा चेद्गतिर्नेत्यस्य** व्याख्यानं **भगवत्कृतश्चेत् प्रतिबन्धस्तदा भगवान् फलं न दास्यतीति मन्तव्यमिति** । अक्षरार्थस्तु भगवतश्चेत् फलदानमकर्तव्यं सर्वथा न तदा गतिः प्रभुप्राप्तिः । अकर्तव्यतानिर्धारस्तु निरन्तरं सेवां कुर्वाणस्याचिन्तितस्यापि लौकिकवैदिकादेर्मुहुरापतनात् । ननु भगवत्सेवासिद्धौ इतरसेवा भगवत्प्राप्त्यर्थी कर्तव्येत्याशंक्याहुर्विवरणे **तदान्येति** । भगवल्लक्षणफलस्येतरसाधनासाध्यत्वेन अनुग्रहमात्रसाध्यत्वेन च सेवायां प्रतिबन्धकरणादनुग्रहाभावनिश्चयेन तत्साधनार्थं प्रयासस्य तदसाधकत्वात् व्यर्थेत्याशयः । अत **एवोक्तमासुरोयं जीव इति निर्धार इति** । यथा वा तत्त्व**निर्धारो विवेकः साधनं मतमेतस्य विवरण तदा ज्ञानमार्गेण स्यातव्यं शोकाभावायेति** । विवेक इति । ज्ञानमार्गश्च जीवब्रह्मणोरभेदज्ञानं जगन्मिथ्यात्वज्ञानं नित्यानित्यवस्तुविवेक इहामुत्रफलभोगविराग इत्यादिः । सांख्येन योगेन वा सिद्धिः, औपनिषदः, तस्मिंस्तस्यानधिकारित्वात् । मूले **वा** शब्दोनादरे । इतोपि न ज्ञानमार्गीया मुक्तिरपि तु शोकाभाव एवेत्याहुः **शोकाभावायेतिपदेन** । कथमेवमिति चेत्, निबन्धायासुरी मतेति यारयादिति गृहाण । भगवदर्थिनः फलमेव निरूपणमुचितम्, न प्रतिबन्ध-

निरूपणमित्याशंक्य त्यागार्थमेतन्निरूपितमित्याहुर्बाधकानां परित्याग इति । परित्यागस्तु साधनपरित्यागरूपः पूर्वमेवोक्तः । नन्वेवमलौकिकभोगस्यापि त्याज्यत्वमागतं, नेत्याहुर्भोगेष्वेकं परं विहाय । तथेति त्याग इत्यर्थः । बाधकानामिति वाक्यं सुगमत्वादव्याख्याय निष्प्रत्यूहमिति वाक्यस्य च अलौकिकभोगस्त्वित्यादिना पूर्वमेतद्व्याख्यातत्वात् तत्प्रतीकमपि अगृह्य **सविघ्नोऽल्प** इति वाक्यं व्याख्यातुमाभासयन्ति **साधारणो भोगः कथं त्यक्तव्य** इत्याकांक्षायामाहेति **सविघ्नोल्पो घातकः स्या**दितीति प्रतीकग्रहणम् । तदर्थस्तु **सविघ्नत्वादल्पत्वाद्भोगस्त्याज्य इति । बलादेतौ सदा मता**विति वाक्यव्याख्यानं एतौ सदा प्रतिबन्धकाविति । एतौ लौकिकभोगसाधारणप्रतिबन्धौ सविघ्नत्वाल्पत्वघातकत्वादिर्मिर्हेयतावच्छेदकरूपायुक्तौ । द्वितीये **सर्वे** इति वाक्यं विवृण्वन्ति । **द्वितीयो भगवत्कृतप्रतिबन्ध इति** । द्वितीयत्वं चात्र प्रतिबन्धकमेण बोद्धव्यम् । एवं द्वितीयपदमात्रं व्याख्याय कृत्स्नं वाक्यं व्याख्यातुमवतारयन्ति **ज्ञानस्थित्यभावे चिन्ताभावार्थमाहे**ति । द्वितीय इतीति स्पष्टत्वात् न व्याख्यातम् । भगवत्कृतप्रतिबन्धे जायमाने संसृतेरवश्यभावित्वेन फलान्तरस्यासंभवात् तद्विषयिणी चिन्ता नैव कर्तव्या, व्यर्थत्वादित्यर्थः । **नन्वाद्ये दातृता नास्तीति** वाक्यव्याख्यानमाद्यफलाभावे भगवतो दातृत्वं नास्तीति । मूले आद्यपदं प्रतिबन्धकत्रये आद्यपरम् । तथा चाद्ये उद्वेगे जायमाने सतीत्यर्थो बोध्यः । विवृतौ तु आद्यफलाभाव इत्यत्र फलाभावपदयोः षष्ठीतत्पुरुषं विधाय समस्तस्य आद्यपदेन तृतीयातत्पुरुषो बोध्यः । आद्यफलस्य अभाव इति तु न भ्रमितव्यम् । फलाभावस्याप्रत्यक्षत्वेन दातृत्वाभावे लिंगत्वासंभवात् । तथा च सेवायां क्रियमाणायाम् मनस उद्वेगे जायमाने अमानसीत्वादनाधिदैविकीत्वसंपत्तौ सैतिल्याश्च फलाजनकत्वेन भगवतो दातृत्वाभावः स्पष्ट एव । प्रभोः का वा शक्तिर्मानसोद्वेगनिवारणे यतः । तदेवोक्तं विवरणे तदा सेवाऽनाधिदैविकीत्युक्तं भवतीति । **तृतीये बाधकं गृहमिति** वाक्यस्य आशयं विवेचयन्ति । **भोगाभावस्तदैव सिध्यति यदा गृहपरित्याग इति** । तथा च मूले प्रतिबन्धकतृतीयापेक्षं तृतीयपदं बोध्यम् । यदर्थमेतावन्निरूपितं तत्प्रयोजनमाहुरवश्येति । इयं फलत्रयी प्रतिबन्धकत्रयी चावश्या, न स्ववशा, भक्तिमार्गीयफलप्रतिबन्धनिवृत्त्योर्भगवदधीनत्वात्, तथापि निरन्तरं आध्या फलप्रतिबन्धयोः सश्लेषासंश्लेषार्थम् । नन्वितोपि किञ्चित्फलान्तरं प्रतिबन्धान्तरं वा भक्तिमार्गे स्यादिति नेत्याहुः **सर्वमन्यन्मनोभ्रम इति** । मोक्षपापादेः फलत्वप्रतिबन्धकत्वयोरसंभवादिति भावः । तथा च 'स्वर्गापवर्गनरकेष्वपी'ति 'विकर्म यचोत्पतित'मिति च भक्तिमार्गीयस्यैतदेव फलम्, उत्तममध्यमसाधारणादिभेदेन । न च निरस्तसमस्तविशेषे कथं तारतम्यमिति वाच्यम् । एतद्विना लीलानुपपत्तेः । तथा चोक्तम्, 'अहो मायागुणा विष्णोराकारश्चिच्छरीरता । निर्दोषत्वं तारतम्यं मुक्तानामपि चोच्यते' । 'मुक्ता अपि लीलाविग्रहं

कृत्वा भजन्त' इति च । स्पष्टं चैतदाकरे । प्रभुसमर्पितदेहादेः फलनैयत्यात् न तेनैतद्भाव्यमिति नेत्याहुः तदीयैरपीति । तत्प्रतिबन्धकत्रयस्य फलत्रयस्य च भावनं कार्यम्, पुष्टिमर्यादास्थस्य साधनद्वारैव फलनैयत्यात् । तथा चोक्तमाकरे 'स चिरकालोक्तेत्यारभ्य सुधां ववर्ष तथैव सर्वत्र वर्षिष्यतीति न ज्ञातुं शक्यम्, अतो मर्यादया तद्भजनमेव सर्वेषां कर्तव्यत्वेन श्रेयमिति दिगित्यन्तेन । न चायं पुष्टिस्थ एवेति वाच्यम् । तस्य फलविलंबासंभवादिति आहुः पुष्टौ नैव विलम्बयेदिति । फलं प्रभुरिति शेषः । एवं सत्वरजस्तमसां परस्पराभिभवनोद्रेकनिमित्तमनःखेदेपि एतद्भावनमेव कर्तव्यम्, तत एव भगवत्परे चित्ते जायमाने मनःक्षोभनिवृत्तेः । क्षोभश्चायं फलविलंबादेव, नान्यस्मात् । अतस्तत्रापि नान्यत्साधनं, किन्त्वेतदेव कर्तव्यमित्याहुः गुणक्षोभेपि द्रष्टव्यमेतदेवेति मे मतिरिति । ननु भगवदीयत्वस्य फलावश्यंभावनियमात् फलविलम्बे च भगवदीयत्ववैयर्थ्यात् प्रतिबन्धानामसंभव एव, ततश्चैतन्निरूपणं व्यर्थमेवेति चेत्, इयं नाशंका, अपि तु सिद्धान्ताबोधजभ्रमजन्या कुसृष्टिरेवेत्याहुः कुसृष्टिरत्र वा काचिदुत्पद्यते स वै भ्रम इति । भ्रमत्वं तु स्वतन्त्रेच्छस्य प्रभोर्भक्तवैचित्र्यं विना लीलानुपपत्तेर्वैचित्र्यस्यावश्यवाच्यतया मर्यादापुष्टेरनवोधत्वात् तादृशभक्तस्य च प्रतिबन्धफलविलम्बानामपरिहार्यत्वात् तस्य तथा निरूपणमनुचितमिति कथनस्य सिद्धान्तानवबोधविजृंभितत्वात् पुष्टौ नैव विलम्बयेदित्यादिनोक्तोप्यर्थोवसरे स्मारितः ।

घूर्ण्यन्नवायजलधिप्रविभूतचन्द्रश्चन्द्रावलीरमणकौशलमादधानः ।
राधाननेन्दुसुषमामृतपानमत्तो नन्दात्मजो हृदि तमोहृतये स मेऽस्तु ॥ १ ॥

इति श्रीसेवाफलटीका ।

श्रीकृष्णाय नमः ।

# सेवाफलम् टिप्पणसमेतम् ।

वल्लभाचार्यचरणाः प्रसीदन्तु सदा मयि । यदाश्रयकथामात्रेऽप्यखिलाः पुष्टिसिद्धयः ॥१॥
यद्यपीश्वरवाक्यार्थाः स्वतोऽज्ञेयास्तथाप्यहम् । सेवाफले टिप्पणं तत्कृपया वक्तुमुत्सहे ॥२॥

अथ श्रीवल्लभाचार्यनिरूपितं सेवाफलाख्यं प्रकरणं तन्निरूपितयैव टीकया सहितं सुगमत्वाय विव्रियते । यादृशीति । यादृशी सेवा मया मुख्यसेवासाधनीभूता तनुवित्तजा सिद्धान्तमुक्तावल्यादिषु प्रकर्षेणोक्ता तस्याः सिद्धौ परिणामदशायां इहामुत्र च यत्फलं भवति तदुच्यते । अत्र फलमिति जात्यभिप्रायेणैकवचनम्, तेन फलत्रयमुक्तं भवति । तदेवोक्तं टीकायां सेवायां फलत्रयमित्यनेन । नन्वेकस्या एव सेवाया विसदृशं फलत्रयं कथं भवितुमर्हतीति चेत्, इत्थम्, भगवानस्मिन् भक्तिमार्गे शुद्धपुष्टिमर्यादा-

पुष्टिप्रवाहपुष्टिभेदेन भक्तानंगीकरोति । तत्र शुद्धपुष्टिमार्गाचार्यप्रकटितत्वात् साक्षात्परम्पराभेदेन सद्यो विलम्बेन वा पुरुषोत्तमसम्बन्धावश्यंभावरूपः पुष्ट्यंशस्त्रिष्वप्यनुस्यूत एव । इतरावग्रे वक्ष्यमाणबाधकसम्भवान्यथापत्यवधेयौ फलत्रयकथनेन च । साधनफलयोस्त्रित्वे वस्तुतो नियमिका विचित्रा तदिच्छैव । तथा च यं भक्तं यस्मिन्मार्गे भगवानंगीकरोति तस्मै तदनुसारेण फलं प्रयच्छतीति न काप्यत्रानुपपत्तिः । अथ तत्रयं किंरूपमित्याकांक्षायामुच्यते । **अलौकिकस्येत्यारभ्याधिकारो** चेत्यन्तेन । तद्विवरणमलौकिकसामर्थ्यमित्यादि वैकुण्ठादिष्वित्यन्तम् । अर्थस्तु भगवानलौकिकं लोकवेदातीतं पूर्णं सर्वोत्तमावैकल्यं फलं साधनरहितं यदा वरवत् दातुमिच्छति तदैव आद्यः फलाव्यभिचरितपूर्वजन्मसंबंधी सकलफलाग्रगण्यो व्रजभक्तसदृशो यो मनोरथः स सिध्येत् । तदवान्तरफलं अलौकिकसामर्थ्यं भजनानन्दानुभवयोग्यतारूपं सिध्यतीत्यर्थः । अत्र द्विरसायां वक्तव्यायां दान इति सिद्धवन्निर्देशस्तु भगवतः स्वतन्त्रत्वात् तद्दानस्य नित्यत्वात् निरपेक्षत्वादनंतत्वाच्च । तथा चास्मिन्नेव जन्मनि भगवान् साक्षात् स्पर्शादिसुखं कदाकदाचित् तमनुभावयतीति इह लोक एव तेषां सकलपुरुषार्थाधिकफलसिद्धिर्भवति, किमु वाच्यमग्र इति कैमुतिकन्यायेन आमुष्मिकफलस्यानिर्वचनीयत्वं सूचितम् । अत एव पुष्टिमार्गीयामुत्रिकफलस्यात्र न स्फुटोक्तिः अनुक्तसिद्धत्वादवचनीयत्वाच्च । हि युक्तश्चायमर्थः । यत् परमोत्कृष्टं फलं भगवद्दत्तमेव प्राप्यते, नान्यथापीति । चकारस्त्वप्यर्थे । तथा चाद्योपि श्रेष्ठोपि जीवस्वरूपविचारे भवितुमयोग्योपि श्रीमदाचार्यपक्षपाताद्भगवता दीयते चेत्, सिध्यत्येव, केन वा रोद्धव्यः, नान्यथापीति भावः । अल्प इति पाठे पुष्टिमार्गीयसाक्षाद्भगवत्संबन्धिफलमगम्यत्वात् जीवैर्मनोरथीकर्तुमपि न शक्यते । अतः फलापेक्षया स्वल्पोपि मनोरथः भगवान् स्वानुरूपमेव फलं ददातीति पूर्ण एव सिध्यति, न तु जीवविचारितरूपमात्र इत्यर्थः । इत्येकमविहितभक्तसदृशं फलमुक्तम् । विहितभक्तविहितं द्वितीयमाहुः **फलं** वेति । तद्विवृतिः सायुज्यमिति । सायुज्ये फलोक्तिस्तु लोकवेदयोस्तस्यैव फलत्वेन प्रसिद्धेः । तेन यं मर्यादापुष्ट्यावंगीकरोति तस्मै 'मामेवैष्यसी'त्यादिवाक्योपदिष्टं पुरुषोत्तमसायुज्यं प्रयच्छतीत्यर्थः । तृतीयं फलमाहुः **अधिकारो** चेति । तट्टीका सेवौपयिकदेहो **वैकुण्ठादिष्विति** । वैकुण्ठादिषु किञ्चित् परिचरणं कुर्वन् तिष्ठतीत्यर्थः । आदिपदाद्भूमावपि जन्मान्तरान् चेदवशिष्टान् प्राप्नोति तदापि सेवापर एव भवतीति ज्ञापितम् । अथवा देहाध्यासस्योक्तत्वात् जीवन्मुक्तो भवतीत्यर्थः । पुष्टंशस्य सत्त्वादग्रे यथाधिकारं पुरुषोत्तमसंबन्धो भावीति ज्ञेयम् । तदुक्तं सिद्धान्तमुक्तावल्यां 'उभयोस्तु क्रमेणैव पूर्वोक्तैव फलिष्यती'ति । यद्वा, **यादृशीति** पूर्ववत् । फले त्रित्वोक्तिरैहिकामुष्मिकाभिप्रायावान्तरपरमफलाभिप्राया वा । वस्तुतः परमफले विहिताविहितभक्त्यधिकारके सायुज्यभजनानन्दरूपद्विविधे एव । तथा चैकमैहिकमवान्तरफलं

वा । अग्रे आमुष्मिकमधिकारिभेदेन द्विविधं परमफलमिति त्रैविध्यं फले । अत एव नि-बन्धे विहितभक्तानां सायुज्यमुक्तं, परमफलत्वेन, अविहितभक्तानां गोपिकादितुल्यानां भज-नानन्दरूपमेव । फलद्वैविध्ये कारणं, सर्वात्मभावतदितरभावसाध्यपदार्थतारतम्यज्ञापनमेव । अथ कश्चिद्ग्रहिलस्तत्फलस्य द्विविधत्वे तत्प्राप्तौ चान्यत्सेवैव वा भिन्नप्रकारा कारणम-स्त्विति वदति चेत्, तत्राहुः **अलौकिकस्येति** । इदं फलत्रयमप्यलौकिकं भवति, अत-स्तद्भगवतैव दीयते चेत् प्राप्यते, नान्यथा । तत्रैकं प्रथमं फलमिह लोके एव भवति, इतरे त्वमुत्र । तत्राग्रिमफलद्वयस्य प्रत्येकं सूचकम् । ऐहिकफलेपि द्वैविध्यमाहुः **आद्य** इति । आद्यः सिध्येत्, मनोरथश्च सिध्येत् । अयमर्थः । यस्य सायुज्यं भावि स आद्यो मुख्यः भक्तिमार्गीयसकलसाधनसंपन्नो भवति । यस्य पुनः साक्षाच्छ्रीपुरुषोत्तमसंबन्धिमु-ख्यरसानुभवो भावी तस्य संन्यासनिर्णयोक्तप्रकारकातिविरहजवैक्लव्यादिसहिता परमार्ति-रूपाधिकारसंपत्तिर्भवति । अल्प इति पाठे अल्पस्तुच्छो दास इति यावत् । तथाच माहात्म्यपूर्वककेवलदासभावयुक्तो भवतीत्यर्थः । अग्रे पूर्ववत् । एवमवान्तरफलद्वयं निरूप्य अग्रिमपरमफलद्वयमाहुः फलं सायुज्यं वा पुरुषोत्तमस्य । अधिकारः सेवौपयिकदेहो वैकुण्ठादिषु वा । अत्र वैकुण्ठपदं लोकवेदप्रसिद्ध्यभिप्रायेण । वस्तुतस्तु मद्धात्मके स्वधामनि । तथाच 'यत्र गावो भूरिशृङ्गा अयासः' इति श्रुतिनिरूपिते परमपदे मुख्याधिकाररूपसाक्षाद्भजनानन्दानुभवयोग्यस्वरूपावाप्तिरूपः । सिध्येदिति सर्वत्रानुषङ्गः । आदिपदात् यत्रैव साक्षात् पुष्टिपुरुषोत्तमसांनिध्यं तत्रैव सेवां कुर्वन् तिष्ठतीति ज्ञापितं भवति । यद्वा । **आद्य** इति । आदिपदेन अ-ग्रिमफलाधिकरणकस्थित्यपेक्षया प्राथमिकं सद्योनुभूयमानं जन्मोच्यते । तत्सम्बन्धी यो मनोरथः यथाधिकारमग्रिमफलविषयकाभिलाषरूपः स सिध्यतीत्यर्थः । पाठान्तरे तु पूर्वा-र्थवत् । इममेव सर्वमर्थमनुसन्धाय टीकायामुक्तमलौकिकसामर्थ्यमिति । सायुज्यप्रापकं भक्तिमार्गीयसाधनसम्पत्तिरूपं स्वरूपप्रापकं तद्रससहिष्णुतारूपं चेति । अत्र साधनफ-लयोः सम्पत्तौ कालकर्मादयो नियामका भविष्यन्तीत्याशङ्कायामाहुः न कालोऽत्रेति । सर्वोपजीव्यत्वात् काल एवोक्तः । तेन भगवदिच्छाव्यतिरिक्तः कोऽपि न नियामक इ-त्युक्तं भवति । तदत्र स्वच्छंदचारित्वं भविष्यतीत्याशङ्क्य तन्निरासपूर्वकं सावधानतया स्थितिज्ञापनाय मध्ये अन्तरायोत्पत्तिमाहुः उद्वेग इति । तस्य विवरणं सेवायामित्यारभ्य भोगो वेत्यन्तम् । एतत्त्रितयमपि बाधकमस्ति । यथा तदनुत्पत्तिर्भवति तथा यतनीयमि-त्याशयः । ननु उद्वेगप्रतिबन्धभोगाः क्रमेण मनोजन्यत्वात् दैवागतत्वात् क्षुदादिनिवर्त-कत्वाच्चाशक्यपरिहारास्ते कथं त्यक्तव्या इत्याशङ्कायां त्यागप्रकारमाहुरग्रे **बाधकानां परित्याग** इति । तट्टीका त्रयाणां साधनपरित्यागः कर्तव्य इति । सिद्धाश्चेत् त्यक्तुम-शक्या एव । अतस्तत्साधकवस्तूनां त्यागे तदनुत्पत्तिर्भवतीत्यर्थः । अथ तेषु प्रत्येकं त्या-

त्याज्यात्याज्यभेदेन द्वैविध्यमस्तीति सामान्यतो वदन्तः प्रथमं त्याज्यवस्तुस्वरूपमाहुः अ-कर्तव्यमिति । व्याकृतिः भगवत्कृतश्चेत् प्रतिबन्ध इत्यारभ्य विवेक इत्यन्ता । अर्थस्तु यत्कार्यं सर्वथा भगवान् कर्तुं नेच्छति तत्र यावद्बुद्धिबलोदयं जीवैः दृष्टादृष्टोपायैः प्रयत्ने कृतेपि प्रतिबन्धराहित्यपूर्वकं तत्कार्यं न सिध्यति, तदा भगवत्कृतोऽयं प्रतिबन्धोऽयमित्यवधेयः । तदा भगवान् फलं न दास्यतीति मन्तव्यम् । तदा अन्या तदनन्तरं कृता या सेवा सा व्यर्था । यतः फलशून्या । तदा किं कर्तव्यं तेनेति प्रश्ने उच्यते । तदायं परिदृश्यमानो मल्लक्षणो वा जीव आसुर इति मनसि निर्धार्य ज्ञानमार्गेण वेदोक्तेन स्थेयम्, तत्र मयैतावान् प्रयासः कृतस्तथापि किमिति न स सिद्धिं प्राप्त इतिरूपखेदाभावाय हरिः सर्वं निजेच्छ-यैव करोति करिष्यति अकार्षीदित्येवं विवेकः कर्तव्य इत्यर्थः । अनासुरत्वमावेशजन्यं ज्ञेयम् । अन्यथा सहजासुरस्य ज्ञानाद्यनधिकारित्वेन श्रीमदाचार्यास्तस्य कर्तव्यत्वं नोपदिशेयुः । तेनासुरत्व आवेशिसहजभेदेन द्विविधं ज्ञेयम् । द्वितीयमग्रे वक्ष्यंति द्वितीयेत्यनेन । अन्यथा पूर्वं विवेकः साधनं मतं इत्युक्तम्, अग्रे सर्वथा चिन्ता त्याज्येति वक्ष्यते तेनान्योन्य विरुद्धवाक्यकथनेन वदद्व्याघातः प्रसज्येत । तथा च स-र्वथा भगवान् यत्कर्तुं नेच्छति तस्याचार्योक्तसंकेतैर्भगवदीयद्वारा वा यथा तत्त्वनिर्धारो भवति तथा कृत्वा सर्वथा असाध्यत्वे ज्ञाते तदुपक्रम एव न कार्यः, किन्तु विवेकपूर्वकं स्थेयमित्यर्थः । अथ त्याज्यात्याज्यभेदान् तत्स्वरूपाणि च विनिश्चित्य प्रकटमाहुः भोगे-प्येकमित्यादि **तृतीये बाधकं गृहमित्यन्तेन** । तद्व्याख्यानं **भोगो द्विविध** इत्या-रभ्य ग्रन्थपरिसमाप्ति । अर्थस्तु भोगप्रतिबन्धौ लौकिकालौकिकभेदेन साधारणभगव-त्कृतभेदेन च प्रत्येकं द्विविधौ । तत्र लौकिको भोगः स्वच्छन्दतया यथेष्टं सर्वेन्द्रियसंतर्प-णादिरूपः । स सर्वथा त्याज्यः । तदुक्तं श्रीमदाचार्यैः 'स्वयमिन्द्रियकार्याणि', 'विषया-क्रान्तदेहाना'मित्यादिवाक्यैः । साधारणप्रतिबन्धस्तु त्रैवर्गिकायासासक्त्यादिरूपः, सोपि तथा । एतस्य भगवद्धर्मापेक्षयातिनिर्बलत्वेन सेवायासक्तस्य वृथा कालक्षेपजनकत्वमस्ति । तदुक्तं 'तावत्कर्माणि कुर्वीत' 'मत्कर्म कुर्वतां पुंसा'मित्यादिवाक्यैः । ननु तर्हि धर्मादिशास्त्रभयवैयर्थ्यं स्यादिति चेत् । न । यतो शुद्ध्यैत्युक्त टीकायाम् । लोकसंग्रहा-र्थकरणाभिप्रायेण । तदेव गीतायामुक्तं 'सक्ताः कर्मण्यविद्वांस' इति । अन्यथा तत्तन्नियत-कारणकमेव फलं स्यात्, नैतन्मार्गीयम् । अथालौकिकभोगस्तु वस्तुमात्रस्य भगवदुप-योगे तदयोग्यत्वे च जाते तद्दत्तप्रसादत्वेन स्वोपयोगादिरूपः, स न त्याज्यः । यतः स भोगः फलानां मध्ये प्रथमफलेऽलौकिकसामर्थ्यरूपे प्रविशति, तदङ्गतां प्राप्नोति । काय-वाङ्मनःशोधकत्वात्, स्वधर्मत्वाच्च । तदुक्तं 'त्वयोपभुक्तस्रग्गन्धे'त्यादिवाक्यैः । 'यत्क-रोषि यदश्नासि' 'कायेन वाचा मनसेन्द्रियैर्वा' इत्यादिभिर्भोगस्य यथाकथंचित् कर्तव्य-ताप्युक्ता । द्वितीयो भगवत्कृतप्रतिबन्धः, स स्वरूपतः फलतश्च पूर्वमुपपादितः । नन्व-

सामर्थ्यरूपं फलमुच्यते । यतो हि निश्चितम् । अलौकिकसामर्थ्यस्य दाने सति तनुवित्तजा-सेवाप्रारम्भे जातो यो मनोरथः ममानया सेवया मानसीसेवा सिध्यत्वेवंरूपः स सिध्येत्, अत इदं फलमङ्गभूतमुच्यते । अथवा सायुज्यं फलमङ्गभूतमुच्यते । अथवा साक्षात्सेवोपयो-ग्यधिकाररूपदेहोद्गमभूतं फलमुच्यते । यत एतयोरपि दाने प्रथमं जातो मनोरथः सिध्येत्, नान्यथा। तस्मादेतयोरपि मानसीसेवायामङ्गभूतत्वम् । अस्मिन् फलत्रये कालो न नियामकः संपादको न भवति। यतः पुष्टिमार्गीयदैवजीवे मानसीसेवार्थं भगवदुत्पादितमेवैतत्फलत्रयम् ।

एवं मानसीसेवायामङ्गभूतं फलत्रयमुपपाद्य मानसीसेवायां प्रतिबन्धकत्रयमुप-पादयन्ति **सेवायां प्रतिबन्धकत्रयम्** । तदेव विशदयन्ति **उद्वेग** इति । मानसी-सेवायां तु उद्वेगः बाधकं भवेत् । अथवा प्रतिबन्धः बाधकं भवेत् । भोगो वा बाधकं भवेत् । एवं बाधकत्रयं सेवायां प्रतिबन्धकत्रयम् । तुशब्दोऽन्यव्यावृत्त्यर्थम् । **बाधकानां परित्याग** इति । बाधकत्रयाणां साधनपरित्यागः कर्तव्यः । भोगो द्विविधः । लौकि-कोऽलौकिकश्च । द्विविधेऽपि भोगे एकं लौकिकभोगरूपं बाधकं तथा त्याज्यम् । अपरं द्वितीयमलौकिकभोगस्वरूपं निष्प्रत्यूहं निर्विघ्नं भगवतैव निर्वाहात् । स अलौकिकभो-गस्तु महान् भोगः सदा निरन्तरं सर्वेन्द्रियाणां भगवत्परतारूपः । फलत्रयाणां मध्ये प्रथमे फलेऽलौकिकसामर्थ्यरूपे प्रविशति । अतो न त्यक्तुं योग्यः। प्रतिबन्धोऽपि द्विविधः। साधारणो भगवत्कृतश्च । तत्र प्रतिबन्धद्वये आद्यः साधारणः बुद्ध्या उपायेन त्याज्यः । भगवत्कृतश्चेत् प्रतिबन्धस्तदा भगवान् फलं न दास्यतीति मन्तव्यम् । तदेवाहुः **अक-र्तव्यमिति** । भगवतो जीवकर्तृकं भजनं कर्तुमयोग्यं चेत्तदा सर्वप्रकारेण गतिर्नैहि । फलं नेति निश्चयः । यदा भगवत्कृतप्रतिबन्धः सर्वथा निवारयितुमयोग्यस्तदा तत्प्रति-बन्धनिवारणार्थं कृता या अन्यदेवतासेवा सापि व्यर्था । अन्यफलदातॄणामपि देवानां भगवदधीनानां भगवत्कृतप्रतिबन्धानिवारकत्वात् । किञ्च, यदा भगवत्कृतप्रतिबन्धस्तदा आसुरोयं जीव इति निर्धारः । अयं जीवो दैवः पुष्टिमार्गीयजीववत् सेवादिना प्रती-यमानोऽप्यासुर इति निर्धारः । दैवजीवे भगवत्कृतप्रतिबन्धासंभवात् । ननु यदा भक्ति-मार्गीयभजने भगवत्कृतप्रतिबन्धस्तदा शोकाभावाय तेन किं कार्यमित्याकांक्षायामाहुः **यथा** वेति । वेत्त्यनादरे । यथा येन प्रकारेण वेदान्तश्रवणादिना अन्येनापि येन केन-चित्प्रकारेण तत्त्वनिर्धारः स्वरूपनिर्धारो भवति तेन प्रकारेण तस्य विवेकः साधनं संमतम्। विवेकस्वरूपं तदेव विवृतं तदा ज्ञानमार्गेण स्थातव्यम्, शोकाभावायेति विवेकः । यदा भक्तिमार्गीयभजने भगवत्कृतप्रतिबन्धस्तदा शोकाभावाय ज्ञानमार्गेण मया स्थातव्यमिति विवेकरूपं साधनम् । साधारणो भोगः कथं त्यक्तव्य इत्याकांक्षायामाहुः **सविघ्नोऽल्पो घातकः स्यादिति** । सविघ्नत्वादल्पत्वाद्भावविघातकत्वात् साधारणो भोगस्त्याज्यः । बलावेतौ सदा मतौ । एतौ साधारणप्रतिबन्धसाधारणभोगरूपौ-यदाप्रतिबन्धकौ संमतावत-

स्त्याज्यौ। द्वितीय इति । द्वितीयो भगवत्कृतप्रतिबन्धस्तस्मिन् सति ज्ञानमार्गेणापि स्थित्य-
संभवे चिन्ता भवति । तदभावार्थमाहुः द्वितीय इति । ज्ञानमार्गेणापि स्थितौ भगवत्कृ-
तप्रतिबन्धे सर्वथा चिन्ता त्याज्या । संसारनिश्चयात् । सर्वत्र भगवत्कृतप्रतिबन्धादयं जीव
आसुर इत्यस्य संसार एव भवति, नतूद्धार इति निर्धारात् सर्वथा चिन्ता त्याज्या । भगव-
त्कृतप्रतिबन्धस्य ज्ञापकमाहुः नन्वाद्य इति । नन्विति विरोधोक्तौ । दैवजीवे सर्वेन्द्रियाणां
भगवत्परत्वं, तेन तत्कृता सेवा आधिदैविकी, आधिदैविको भगवान् तत्संबन्धिनी भवति ।
आसुरजीवे भगवत्कृतप्रतिबन्धादाद्यफलाभावे सर्वेन्द्रियाणां भगवत्परत्वाभावे सति तत्र
भगवतः फलदातृत्वं नास्ति । तदा तत्कृता सेवा नाधिदैविकी भगवत्संबन्धिनी न भवती-
त्युक्तं भवति । तस्य प्रपञ्चासक्तत्वात् । तृतीय इति । ननु तृतीये–भोगाभावे बाधकं
गृहम् । भोगाभावस्तदैव सिध्यति यदा गृहपरित्यागः । अवश्येयमिति । इयं फलत्रयी
प्रतिबन्धकाभावत्रयी अवश्या, न स्वशक्या । तथापि भाव्या विचारणीया । मम फलत्रयं
भवतु, प्रतिबन्धकाभावत्रयं भवतु, एवं विचारणीया । फलत्रयप्रतिबन्धकाभावत्रयाभ्याम-
न्यत् सर्वं फलभावनं प्रतिबन्धकभावनं स्वान्तर्भ्रान्तिरित्यर्थः । ननु पुष्टिमार्गीयाणां किमर्थं
भावनं, तं विनैव फलसिद्धेरित्याशंकायामाहुः तदीयैरिति । पुष्टिमार्गीयैरप्येतद्भावनं का-
र्यम् । एतद्भावने भगवान् पुष्टिमार्गे फलदाने विलम्बं न करोत्येव । अतः पुष्टिमार्गीया-
णामेतद्भावने शीघ्रं फलं भवत्यतस्तैरपि भावनं कार्यम् । ननु सत्वादिप्राकृतगुणकृतचित्त-
क्षोभे सति कथं भावनं कार्यं तत्राहुः गुणक्षोभेपीति । चित्तस्य गुणत्रयकृतक्षो-
भेप्येतदेव फलप्रतिबन्धकत्रयप्राप्तिनिवृत्तिभावनं तन्निवारणे साधनरूपं द्रष्टव्यम् । एत-
द्भावनयैव गुणत्रयक्षोभोपि नश्यतीति मे मतिः । एवंप्रकारिका मम बुद्धिः । कुसृष्टिरिति ।
अत्रैतद्भावनकृतगुणत्रयक्षोभनिवारणे काचित् कुसृष्टिरेतद्भावनयैव गुणत्रयकृतक्षोभो नश्य-
तीति कथं, गुणत्रयकृतक्षोभनिवारणे साधनान्तराण्यपि भविष्यन्तीत्येवंरूपानुपपत्तिरुत्पद्यते
चेत्, निश्चयेन स वै भ्रमः । स्वान्तर्भ्रान्तिः । अत्र न काप्यनुपपत्तिरिति दिक् ।

इति श्रीसेवाफलविवृतिप्रकाशः ।

---

निषिद्धसुखस्यागी पशुरेवेति न्यायेन साधारणो भोगः किमर्थं त्यक्तव्यः, तत्राहुः **सविघ्नेति** । अस्य टीका **सविघ्नत्वादादिप्रतिबन्धेत्यन्ता** । अर्थः सविघ्नत्वात् बह्वन्तरायवत्त्वात् तत्रापि स्वरूपतः कालतश्च स्वल्पत्वात् घातकोयं त्याज्य एवेत्यर्थः । तथाच साधारणभोगभगवत्कृतप्रतिबन्धौ प्रसह्य फलाभावजनकौ । यतस्तौ मतौ संमतौ न, प्रतिबन्धकत्वात् । अथवा मतौ प्रतिबन्धकत्वेन संमताविलर्थः । तत्र तयोराद्यः स्वसाध्यत्वात् त्याज्य एव । इतरोसाध्यत्वात् मर्यादामार्गेण स्थित्वा सोढव्य इति । पूर्वं यदुक्तं तत् 'प्रवृत्तिं च निवृत्तिं चे'त्यादिभगवद्वाक्यैः सहजासुरेषु मर्यादामार्गोपि याथातथ्येन न सिध्यतीति **ज्ञानस्थित्यभावेत्याभासेनानूद्य** तेषां कर्तव्यमाहुः **द्वितीयेति** । द्वितीये बाधके भगवत्कृतप्रतिबन्धे, अथवा द्वितीये आसुरत्वे साहजिके जाते फलविषयिणी चिन्ता साधनान्वेषणं न कर्तव्यम् । यतः फलं तस्यैतन्मार्गीयं न भवत्येव । तर्हि तस्य किं भवतीति प्रश्ने आहुः **संसारेति** । तस्याविद्याकोऽहंममात्मकः संसार एव भवति, अग्रेपि तदनुसारेणैव फलम्, नान्यदपीत्यर्थः । नन्वन्त्यबाधकद्वये द्विरूपत्वं विविच्योक्तं नत्वादिनैतत्कुतः इत्यत्राहुः **नत्वाद्य इति** । तट्टीका **आद्य इति** । आद्यो यः फलस्याभावो यस्मादिति फलाभावः प्रतिबन्ध उद्वेग इति यावत् । स यद्यपि साहजिकदुःसङ्गकृतभेदेन द्विविधोस्ति तद्वशात्तत्र चित्तशुद्ध्यभावेन कदाचित् स्वधर्मत्यागनिन्दादिकमपि भवति, तथापि द्वैविध्येपि भगवान् सर्वात्मना फलं नैव संपादयतीति न, किन्तु किञ्चिन्न्यूनाधिकं भवत्येव । अतस्तत्र भगवतोऽदातृत्वं फलविषयकं नास्ति, किन्त्वग्रिमजन्मान्तरेषु फलमुत्तमं मध्यमं वा भवत्येवेत्यर्थः । तदेवोक्तं निबन्धे 'अत्रापि वेदनिन्दायामधर्मकरणात्तथा । नरके न भवेत्पातः किन्तु हीनेषु जायते । पूर्वसंस्कारतस्तत्र मजन्मुच्येत जन्मभि'रिति । तर्हि सद्यस्तस्य किं भवतीत्याकांक्षायामाहुस्तदेति । तदा तनुवित्तजा सेवा आधिदैविकी न भवति । यस्यां कदा कदाचित् साक्षात्स्वरूपानुभवः सर्वदा तत्सङ्गमार्यै परमार्तिश्च नियता तादृशी साम्प्रतं न भवतीत्यर्थः । अथ लौकिकभोगत्यागप्रकारमाहुः **तृतीय इति** । तद्व्याकृतिर्भोगाभाव इति । गृहे त्यक्ते तदधीनत्वात् सोपि त्यक्तो भवतीत्यर्थः । अथ अवश्येत्याद्यवशिष्टमूलव्याख्या श्रीमदाचार्यकृता न लभ्यत इति तद्व्याख्यायते । इयं सेवा सदा अवश्या जीवकृत्यसाध्येति भावनीया । अयमाशयोऽत्र । तस्याः कृतौ स्वस्य कर्तृत्वाभिमाने जाते कृताप्यकृतप्राया भवतीति भगवत्येव सर्वं भारं निक्षिप्य तदिच्छयैव सर्वं सम्पद्यत इति निर्भरं तत्परतया सेयमिति । तदुक्तं 'अशक्ये वा सुशक्ये चे'त्यादिवाक्यैः । एतदन्यप्रकारा भावना मनोभ्रमरूपा । यद्वा । इयं सेवा सदा अवश्या, जीवकृत्यसाध्या भाव्या च, भावसम्बन्धिनी तत्प्रधाना च ज्ञेयेति शेषः । एतस्मादन्यजीवसाध्यत्वविषयधीरूपत्वज्ञानं मनसो भ्रमः । इति संक्षिप्य सेवास्वरूपमापातत उक्तम् । एवं स्वरूपमुक्त्वा तस्या एतत्प्रकारेणैव ज्ञानं कर्तव्यतां चाज्ञापयन्ति **तदीयैरिति** । अत्राप्रस्तुतत्वेन प्रतीय-

मानोप्यपिशब्द एतत्प्रकारकज्ञानविशिष्टत्वमाक्षिपति । तथाचैवं ज्ञानपूर्णैरपि तन्मदुक्तमेव कार्यम्, नान्यदित्यर्थः । नन्वन्यमार्गद्वये यथोक्तकरणं युक्तं, लोकवेदानुसारित्वात्, न तु शुद्धपुष्टौ, लोकवेदातीतत्वात् । अतस्तत्र यथोक्तकरणं नोपदिश्यत इति चेत्, तत्राहुः पुष्टाविति । एवकारेण विचारान्तराभावपूर्वकमवश्यकर्तव्यत्वं सूच्यते । तथा च पुष्टिमार्गे एतदुक्ताचरणे विलम्बो न कार्यः । यतस्तत्र मार्गाचार्यप्राधान्यमेवोत्कर्षः, तदेव च निर्वहति । तथाकरणेनैव भगवान् प्रसीदति, नान्यथा । अतस्तादृशैस्तदुक्तकरणे सर्वथा विलम्बो न कार्यः । ननु पूर्वं यदुक्तं भगवत्कृतप्रतिबन्धसंभवे तत् सोढ्वा स्थेयमिति, तन्न युक्तम्, यतस्तपोऽनशनदेहाभिघातादिभिराग्रहे क्रियमाणे देवव्रतादेरिवास्यापि प्रतिज्ञापालनं भगवान् करोत्येवेति चेत्, तत्राहुः गुणेति । गुणानां सत्त्वादीनां क्षोभेऽतिक्रान्तमर्यादत्वे जाते अर्थात् गुणाधिक्येन क्रोधमदमात्सर्यादिविकारसंभवेपि स्वाभाविकं त्यक्त्वा मदुक्तमेव कार्यमित्यर्थः । दर्शनमालोचनज्ञानं दृष्ट्वा कर्तव्यमित्यर्थः । तत्र प्रमाणं मे मतिरिति । पूर्वं यदाक्षिप्तं तत्सर्वं सगुणभाववद्भक्तकृत्यम्, मदीयास्तु निर्गुणभावा इति तैर्मदुक्तमेव विधेयम् । तत्राज्ञानमन्यथाज्ञानं च वारयन्ति कुसृष्टिरिति । अत्र मदुक्तौ या कुसृष्टिर्हेतुवादादिरूपचेत स वै निश्चयेन भ्रम एव । श्रीमदाचार्योपदिष्टप्रकारेषु यत्प्रमाणान्तरान्वेषणं तद्भ्रमरूपमेवेति दिक् ।

इति सेवाफले मूले टीकायां च कृतं मया । टिप्पणं श्रीमदाचार्यपदपद्मानुसारिणा ॥ १ ॥

## इति श्रीसेवाफलटिप्पणम् ।

---

श्रीकृष्णाय नमः ।

# सेवाफलम् विवृतिप्रकाशसहितम् ।

प्रणम्य पुष्टिमार्गीयं सप्रभुं वल्लभं प्रभुम् । सेवाफलस्य विवृतिप्रकाशः क्रियते मया ॥ १ ॥

श्रीमदाचार्याः पुष्टिमार्गीयदैवजीवानां मानसीसेवासिद्धावङ्गभूतं फलत्रयं प्रतिबन्धकत्रयं तदभावं च प्रतिपादयन्ति **सेवायां फलत्रयमिति** । मानसीसेवायामङ्गभूतं तनुवित्तजासेवासाध्यं फलत्रयम् । **अलौकिकसामर्थ्यं** सर्वेन्द्रियाणां भगवत्परतारूपमेकं फलम् । **सायुज्यं** सह युनक्तीति सयुक्, सयुजो भावः सायुज्यम्, व्यसनभावानन्तरं देहनाशकेन विगाढभावेनान्यस्फूर्तिराहित्यपूर्वकं भगवता सह योगः द्वितीयं फलम् । **सेवोपयोगिदेहो** वैकुण्ठादिषु । यथा वैकुण्ठव्रजादिषु साक्षात् सेवोपयोगिदेहस्तथा देहो मानसीसेवायामधिकाररूपस्तृतीयं फलम् । एतत्फलत्रयमेव सार्धश्लोकेन प्रतिपादयन्ति यादृशीति । यादृक्प्रकारिका मानसी सेवा 'ता नाविद'न्नित्यादिवाक्यैर्भगवता प्रोक्ता तत्सिद्धावङ्गभूतं येन विना यन्न संभवति तत्तदङ्गमेतादृशमलौकिक-

# परिशिष्टम् ।

| पृष्ठम् | पङ्क्तिः | पाठः | पाठान्तरम् । |
|---|---|---|---|
| ५ | ३९ | सद्विषयकः | सिद्धिविषयकः |
| ६ | ८ | दर्शनसेवायाम् | दर्शने सेवायाम् |
| ६ | २२ | अलौकिकसाधन | अलौकिकभोगसाधन |
| ७ | ५ | द्विविध इत्यनन्तरम्, लौकिकोऽलौकिकश्च । तत्र लौकिकस्त्याज्य एव । प्रतिबन्धो द्विविधो । | |
| ८ | २५ | द्रवादस्य | द्रवश्चा |
| १९ | ३ | प्रयत्नसम्भवेन । | प्रयत्नासम्भवेन । |
| २२ | १९ | तदवैयर्थ्य- | तद्वैयर्थ्य- |

श्रीवल्लभगोस्वामिनां टीकाया मुद्रणानन्तरं प्रभुकृपयास्माभिस्तेषां टीकायाः द्वितीया प्रतिः प्राप्ता । सा टीका श्रीवल्लभगोस्वामिभिः पुनर्लिखिता, इति प्रतिभाति । तन्मध्ये तैः प्रथमटीकापेक्षया केषु केषु स्थलेषु किञ्चिदधिकं लिखितम्, तदत्र वाचकानां जिज्ञासातृप्त्यर्थं ग्रन्थरक्षणार्थं चावतार्यते ।

पृष्ठ २३, पङ्क्ति १२, सर्वाभोग्यसुधानन्तरमिदमधिकं वाचनीयम्—'फलरूपापीयं भगवता साधनतामापादितेति वेणुगीते निरूपितमतोऽलौकिकत्वम् ।'

पृष्ठ २३, पङ्क्ति २४, **सेवोपयोगिदेहो**—इत्यस्यानन्तरं 'इति यस्य देहस्य सेवायामेवोपयोगः, अन्यदाथवा अप्रकटा एव स इत्यर्थः । यत्र स्वरूपानन्ददानम्, तत्र फलत्रयमपि, यत्र धर्मभूतानन्ददानम्, स्वयमप्रधानीभूय, तत्र फलद्वयम्, यत्र स्वप्राधान्येन धर्मभूतानन्ददानम्, तत्र सेवोपयोगिदेहमात्रदानमिति ज्ञेयम्' इत्यधिकम् ।

पृष्ठ २३, पङ्क्ति २७, लभन्ते—इत्यस्यानन्तरं 'इमान्येव फलरूपात्मनिवेदनसख्यदास्यानि ज्ञेयानि' इत्यधिकम् ।

पृष्ठ २४, पङ्क्ति ३, भोगः—इत्यस्यानन्तरं 'भगवदुपयोगिवस्तुपरतायाः प्रतिबन्धकत्वाभावादत्र यद्धर्म्युजाक्षेतिश्लोकव्याख्यातः सर्वथा भगवन्तमप्रपन्नः अन्यपदार्थो ज्ञेयः । अप्रपन्नोननुगतो भगवदनुपयोगीति यावत् । नवरत्ने चित्तोद्वेगमित्यस्यामासे चित्तस्य पुत्रादिपरता उद्वेगपदार्थो निरूपितः । अन्यपरतेतियावत् । तन्न्यायेन त्रयमपीदं ज्ञेयम् ।' इत्यधिकम् ।

पृष्ठ २४, पङ्क्ति ५, मूलार्थः—इत्यस्यानन्तरं 'तत्र द्वयं साक्षात्तद्बाधकं प्रतिबन्धरूपम्, एकं च तदाधारस्य साधनस्य बाधेन बाधकमिति भेदो ज्ञेयः । सामर्थ्यस्य बाधकथनेन सामर्थ्योत्पत्तेः पूर्वमेतत्सम्भवे सामर्थ्यं नोत्पद्येतेति सिद्धमेवेति भावः । नवरत्ने

तथानिरूपणान्निवेदनपदार्थनाशाभावेपि तद्बाधस्तु स्यादिति तुशब्दः । तेन जन्मान्तरव्यवधानं भवतीति निबन्धे निरूपितमिति भावः । सामर्थ्यबाधश्च तद्धेतुभूताभ्यासबाधेन सेवानभ्यस्ता भवतीत्यर्थः ।' इत्यधिकम् ।

पृष्ठ २४, पङ्क्ति ७, लौकिकभोगानाम्—इत्यस्यानन्तरं 'बाधकत्वात्तत्साधनपरित्यागः कर्तव्यः । मनोदेहेन्द्रियाणि च भगवदसम्बन्धिषु न प्रवर्तनीयानि । तथा सति तेषां तत्परता भवति 'विषयान् ध्यायतश्चित्तं विषयेषु विषज्जत' इति वाक्यादिति भावः । साधनपरित्यागं विवृण्वन्तो' इत्यधिकम् ।

पृष्ठ २४, पङ्क्ति १२, भोगः—इत्यस्यानन्तरं 'लौकिकस्त्याज्य इति । सिद्धान्तरहस्योक्तप्रकारेण यथासम्भवं भगवदुपयोगं सम्पाद्य भोगः कर्तव्य इत्यर्थः । प्रतिबन्ध इति । श्रवणकीर्तनादिना हरिश्चेद्धृदयं निविशते तदा पूजा सर्वदा निर्वहति । एवं जाते ततः कार्यान्तरवशाज्जाता तनोरन्यपरता साधारणः प्रतिबन्धः । क्रियमाणेपि श्रवणकीर्तनादौ हरिश्चेन्न निविशेत्तदाभ्यासो न भवति । तेन जाता तनोरन्यपरता या स भगवत्कृतप्रतिबन्धः ।

पृष्ठ २४, पङ्क्ति १३, विभावनीयेत्यर्थः—इत्यस्यानन्तरं 'बुद्धिर्वा तत्र न स्थापनीया । यत्नकरणेपि तदनुचिन्तनं न कर्तव्यमित्यर्थः । अलौकिकभोगो न त्याज्य इत्याशयेनाहुः अलौकिकेति ।' इत्यधिकम् ।

पृष्ठ २४, पङ्क्ति २०, प्रतिबन्धः—इत्यस्यानन्तरं 'ध्रुवस्य गता भक्तिः कुबेरेण सिद्धेति चतुर्थस्कन्धे निरूपितं तथात्राप्याशङ्क्य नेत्याहुः तदेति' इत्यधिकम् ।

पृष्ठ २४, पङ्क्ति २२, बोध्यम्—इत्यस्यानन्तरं 'ननु दुरदृष्टनाशनार्थं कात्यायनीपूजेति कात्यायनीपदनिरुक्तौ सुबोधिन्यां निरूपितम्, दुरदृष्टस्य भगवत्कृतप्रतिबन्धत्वं च तत्रैव निरूपितम् । यदि भगवदिच्छयैवेति । स्वेच्छामप्येतदनुगुणां करिष्यतीति च । तथा च कथमन्यसेवावैयर्थ्यमित्यत आहुरयमिति । लीलास्थेषु रसविशेषानुभवार्थं भगवता प्रतिबन्धः सम्पाद्यते न त्वासुरत्वं तेषु । आधुनिकोयं त्वासुर एव भगवता प्रतिबन्धयुक्तः क्रियते, तदा तु फलाभावनिश्चयात् साधनवैयर्थ्यमिति भावः ।' इत्यधिकम् ।

पृष्ठ २५, पङ्क्ति १७, बाधकत्वाभावात्—इत्यस्यानन्तरं 'विद्यमानमप्यदृष्टं तस्य दुर्बलम् । अत एव प्रारब्धभोजनार्थं प्रभुश्चेद्विलम्बत इत्युक्तम् । लोकवेदस्वारस्यं हरिर्न करिष्यतीति चोक्तम् ।' इत्यधिकम् ।

| | | | | | |
|---|---|---|---|---|---|
| पृष्ठ | ३२ | पङ्क्ति | ११ | हठाद् | हठात् |
| ,, | ३२ | ,, | २८ | सा | स |
| ,, | ९५ | ,, | २१ | विचरणे | चरणे |